नदीनां विद्यमानतापि श्रूयते ; तदस्यैव नदीसुक्तसूक्तस्य सप्तम्यष्टम्योर्ऋचोः समालोच्यं सप्रणिधानम्। तास्वेका 'ऊर्णावती', स्यादेषा कैलाशनिम्नस्थोर्णाप्रदेशीया ; हिरण्मयी, वाजिनीवती, सीलमावतीत्येता अपि तिस्रः स्युरत्युत्तरस्था एव ; 'एनी' नदी तु निम्नबेलुचीस्थाने प्रसिद्धैव ; तथा चित्रापि चित्रलप्रदेशत आगत्य कुभायां मिलिता ; 'ऋजीती' च स्यात् या तत्समीपवाहिनीति ।

एतदुक्तत्रिसप्तनद्यपेक्षया सिन्धोर्नदस्य प्राधान्यं च वर्णितं तत्रैव सूक्ते प्रथमम्। तद्यथा तत्सूक्तीयप्रथमर्चः परार्द्ध एषः—

"प्र सप्त-सप्त त्रेधा हि चक्रमुः प्र सृत्वरीणा मति सिन्धुरोजसा"

अस्यार्थः।— 'आपः' नद्यः 'सप्त सप्त' भूत्वा 'त्रेधा' त्रिधा त्रिश्रेण्यः सत्यः 'प्रचक्रमुः' प्रावहन् प्रवहन्ति, अस्मिन्नार्यावर्त्ते ; सिन्धोः पूर्वस्यां सप्त, पश्चिमस्यां सप्त, उत्तरस्याञ्च सप्तेति। तासां 'सृत्वरीणां' एकविंशतिसङ्ख्याकानां नदीनाम् 'ओजसा' बलेन 'अति' अतिशयितः एको नदः 'सिन्धुः'।

तासां त्रिसप्तनदीनां पुत्र इव राजेव च सिन्धुर्वर्णितस्तत्रैव—

"अभि त्वा सिन्धो शिशु मिन्न मातरो
वाश्रा अर्षन्ति पयसेव धेनवः ।
राजेव युध्वा नयसि त्व मित् सिचौ
यदासा मग्रं प्रवता मिनक्षसि"—इति (४)।

अस्यार्थः।— हे 'सिन्धो'! 'मातरः शिशु' न (इव)' इमा नद्यः 'त्वा अभ्यर्षन्ति' त्वां पयः पाययितु मिवाभितो गच्छन्ति, 'पयसा' युक्ताः 'वाश्राः धेनवः' सुशब्दकारिण्योऽचिरप्रसूता गाव इव। अपि 'त्वं' 'युध्वा' युद्धकारी 'राजा इव' इमौ पूर्वापरनदीसप्तकौ 'सिचौ' सेनानिवेशाविव 'नयसि इत्' प्रेरयस्येव ;

'यत्' यतः 'आसां प्रवतां' प्रवहन्तीनां नदीनाम् 'अग्रम् इनक्षसि' अग्रगो भवसि, अत इति भावः ।

अन्यत्र चात्र संहितायां त्रिसप्तनदीनां श्रवण मस्ति । तद्यथा —"त्रिः सप्त सस्रा नद्यः"–इति ऋ० सं० १०. ६४. ८ ।

तत्त्वतस्त्वेतत्त्रिसप्तनदीपरिवृतः सिन्धुमध्य एवासीत् पूर्वकालिकः आर्यावर्त्तः । अत एवैतरेयके श्रुतम्— "यस्तेजो ब्रह्मवर्चस मिच्छेत्०–० प्राङ् स इयात्, योऽन्नाद्य मिच्छेत्०–० दक्षिणा स इयात्, यः सोमपीथ मिच्छेत्०–० उदङ् स इयात्"– इति (१. २. २.)। प्रागादिदिक्शब्दाश्च कञ्चिदवधि मपेक्षन्ते, कुतः प्रागित्याद्याकाङ्क्षायाः सर्वत्रोपजायमानत्वात् । तदत्र आर्यावर्त्तीयसिन्धु मेव मध्यावधिं मन्यामहे, तस्मात् सिन्धुतः प्रागित्यादिस्वीकारेणैव तेजस्त्वादिसिद्ध्युपपत्तेः। तथा च सिन्धोः प्राग्देशेषु सरस्वत्यादितीरभूमिषु यज्ञानुष्ठानबाहुल्यश्रुतेस्तेजस्त्वब्रह्मवर्चस्वयोर्लाभः समुपपद्यते; शतद्रुसिन्धुसङ्गमतो दक्षिणस्यां हिमप्राचुर्याभावात् तापप्राबल्यात् भवत्येव प्रचुरशस्योत्पत्तिः; सिन्धुतः पश्चिमस्या मरण्यप्राचुर्यात् तत्र पशुलाभः सम्भाव्य एव, शतद्रुसिन्धुसङ्गमादुत्तरस्या मतिशैत्यात् शीतप्रभवस्य वल्लीसोमस्य लाभः शारीरसोमस्य च वृद्धिर्भवेदेवेति । तदित्थ मतिप्राक्तनार्यावर्त्तस्यायं सिन्धुर्मेरुदण्ड इवासीदिति प्रतीयते । इत एव सकारादेर्हकाराद्युच्चारणकुशलैर्यवनानार्यैरिदं भूखण्डं सिन्धुस्थान मिति वक्तव्ये हिन्दुस्तानित्युच्यते ।

किञ्चात्र सिन्धुसङ्गतातिविक्रान्ता यासीन्नदी रसेति विश्रुता, द्वितीयनदीसप्तके तृतीयेति च वर्णिता, सैवासीत् तदानीन्तनार्यावासस्योत्तरसीमेति गम्यते । तथा ह्यनुक्रान्त मिदं शौनका-

चार्येण— 'किमिच्छन्ती पणिभिरसुरैर्निगूढ़ा गा अन्वेष्टुं सरमां देवशुनी मिन्द्रेण प्रहिता मयुग्भिः पणयो मित्रीयन्तः प्रोचुः, स तान् युग्मान्त्याभिरनिच्छन्ती प्रत्याचष्टे"–इति। तस्यैतस्यैदं सायणकृतं भाष्यम्— "इन्द्रपुरोहितस्य बृहस्पतेर्गोषु बलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीसु बृहस्पतिप्रेरितेनेन्द्रेण गवा मन्वेषणाय सरमा नाम देवशुनी प्रेषिता। सा च महतीं नदी मुत्तीर्य बलपुरं प्राप्य गुप्तस्थाने नीतास्ता गा ददर्श। अथ तस्मिन्नन्तरे पणय इदं वृत्तान्त मवगच्छन्त एनां मित्रीकर्त्तुं संवाद मकुर्वन्। तत्र प्रथमतृतीयाद्या अयुजोऽन्त्यावर्जिताः पणीनां वाक्यानि, ०—०, द्वितीयचतुर्थ्याद्या युज एकादशी च षट् सरमाया वाक्यानि"–इति। वस्तुतोऽत्र पणयः=वणिजः, सार्थवाहा इति यावत्; "पणिर्वणिग् भवतीति (२. ५. ३.) नैरुक्तात्। असुराः=बलवन्तः (निरु० ३. २. २.)। नून मेते इह आर्येतरा एव बुद्धान्ते। सरमा देवशुनी दिव्यगुणोपेतास्तन्नामिका सुशिक्षिता कुक्कुरी; बलपुरीस्था गुहा तु नून मार्यशासनाद्वहिःस्था; तथाचानार्यैरपहृता आर्यगावः कुक्कुरीसन्धानेन पुनर्लब्धा इत्येवात्र सारम्, सर्व मन्यत् राजनैतिकं काव्यम्। तदिदं ऋक्संहिताया दशमे मण्डले १०८ सूक्ते एकादशभिः ऋग्भिर्वर्णितम्। तस्यादिमैषा—

"किं मिच्छन्ती सरमा प्रेद मानड् दूरे ह्यध्वा जगुरिः पराचैः।
कास्मे हितिः का परितक्म्यासीत् कथं रसाया अतरः पयांसि"

तदित्थं ज्ञायते, या खलु पूर्वं सुवास्तुप्रदेशस्योत्तरसीमेति वर्णिता, सैवेयं प्रचुरोदका प्रभूतवेगा च नदी पुरासीदार्यानार्यदेशयोरुत्तरसीमरूपेति।

सैषा 'रसा' ऋक्संहितायां बहुवर्णिता । तद्यथा ८. ४९. २—

"गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः"—इति ।

यथा 'गिरेः' 'रसाः' नद्यः 'प्रपिन्विरे', 'अस्य पुरुभोजसः दत्राणि' तथैव प्रपिन्विरे इति तदर्थः । एतेनावगम्यते रसायाः कस्माच्चिद् गिरित एव समुद्भवः । किञ्चेहापर मपि वेद्यम् ;— यथा गङ्गेति नदीनां साधारणं नाम, यथा च सरस्वतीत्यपि, तथैव रसेति च । अत एव निरुक्ते यथा गङ्गाशब्दस्य 'गङ्गा गमनात्'—इति निरुक्तिः कृता, यथा च सरस्वतीशब्दस्य 'सरस्वती' सर इत्युदकनाम ; सर्त्तेस्तद्वती—इति निरुक्तिः कृता ; तथैव रसाशब्दस्यापि 'रसा नदी, रसतेः शब्दकर्मणः'—इति कृतैव नदीसाधारणबोधिका निरुक्तिः । एव मप्येवमादिषु योगरूढ्य-वार्थः सर्वत्र विवक्षितः । निरुक्तकृतः प्रदर्शितरसानिरुक्तेस्तस्या नद्याः सदैव शब्दकारित्वञ्चावगम्यते । प्रदर्शितेऽत्र ऋङ्मन्त्रे 'रसाः'—इति बहुवचनश्रुतेस्तद्बहुत्व मपि गम्यते । तथा च यथा हिमवत्पृष्ठेषु बह्वयो गङ्गाः सन्ति, यथा च सरय्वा अपि द्वित्व मिहैव पुरस्तादुररीकृतम्, तथैव रसाद्वित्व मपि नून मङ्गीकार्यम् ; प्रदर्शिते "तृष्टामया (१०. ७५. ६.)'—इति मन्त्रे तस्याः सिन्धु-सङ्गतत्वस्य, अपरत्र समुद्रसङ्गतत्वस्य च स्फुटावगमात् । तद्यथा ऋ० सं० १०. १२१. ४—

"यस्येमे हिमवन्तो महित्वा, यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू, कस्मै देवाय हविषा विधेम"—इति ।

नैतन्मन्त्रश्रुता रसा साधारणनदीपरेति सम्भाव्यते ; बहु-वचनान्ततया अनिर्देशात् ; अपि त्वेतस्या रसाया नदीषु प्राधान्यं च गम्यते ; भारतप्रधानयोर्हिमवत्समुद्रयोः समानत्वेनाख्यान-

प्रतीतिः। सेयं समुद्रसङ्गता रसा त्वद्यतनार्यावर्त्ततो बहिष्ठा, खोरा-शान्-राज्यान्तर्गता 'आवेस्ता'-ग्रन्थवर्णिता, 'रंहा' इत्याह विश्व-कोषकारः। तथा चेयं रसा तदानीन्तनार्यावासस्य पश्चिमसीमेति च स्यात् पूर्वदर्शित-देवशुनीपणिसंवाद एतद्विषयक एव वेति।

अंशुमत्याद्या नद्यस्त्वेतदार्यावर्त्तीया एवेत्यत्र किमस्ति वक्तव्यम्। "अंशुमती" ऋ० सं० ८. ९६. १३, १४. १५ ऋचो द्रष्टव्याः। सैषा यमुनासङ्गता, दृषद्वतीतः प्राक् स्थिता। "अश्मन्वती" च ऋ० सं० १०. ५३. ८। एषा किल घर्घरातः प्रत्यक्, शतद्रुतो बहुप्राक्, उत्तरतोऽवाग्वहमाना, विनशनप्रदेशीया।

यदिह नदीपरपारगमनं श्रुतम्, तन्नूनं मध्येशियातः समागतानां पूर्वतनार्याणां वच इति शर्म्मण्यादिपाश्चात्यसिद्धान्तोऽनर्थको निर्मूलश्च; स्थानीयार्याणां वच एवेत्युक्तार्थेन यथोपपत्तेः किं महतो वंशस्तम्बाद्यानुकर्षणेनेति सुधीभिर्विभाव्यम्। ऋ० सं० १. १०४. १, २, ३ ऋक्षु वर्णिता शिफानाम नदी तु निषधदेशीयैव सम्भाव्यते। तत्प्रथमर्च्येव निषदनामोल्लेखदर्शनात्। ऋ० सं० ६. २७. ६-ऋग्द्वयश्रुतेः 'हरियूपीया' 'यव्यावती' च नद्यौ आफगानस्थानीये एव सम्भाव्येते। तत्रच तत्रत्य-'हजारा'-प्रदेशीया सम्प्रति हरिरुदित्युच्यमाना नद्येव स्यात् वैदिकहरियूपीयेति।

"पीवानं मेष मपचन्त वीरा न्युप्ता अक्षा अनु दीव आसन्।
द्वा धनुं बृहतीं मप्स्व१न्तः पवित्रवन्ता चरतः पुनन्ता"-इति।

अस्मिन् मन्त्रे (ऋ० सं० १०. २७. १७.) अन्यत्र च यद्ध्वन्यते अक्षा इति, तदपि स्यात् आफगानुत्तरत्र प्रवहमाना 'अक्षस्' नदीति च सुवचम्।

श्वेती नद्येव सम्प्रत्यर्जुनीत्युच्यत इत्युक्तं पुरस्तात् (पृ० २८

५

पं० १); सा हि श्वेतपर्वतान्निर्गतेत्येव तस्यास्तथा नाम सम्पन्नम् । आम्नातञ्च शतपथे— "प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्याः"—इति १४. ६. ८. ९ । ऋक्संहितायां नूनमेषैवाम्नाता "श्वेत्या त्वा"—इति १०. ७५. ६ । श्वेतयावरी नद्यपि स्यात् तच्छ्वेतगिरिप्रभवैव । तदिदं श्रूयते— "उत स्या श्वेतयावरी"—इत्यादि ८. २६. १८ । अपि संहितायां सरयुनदी त्रिः श्रुता ( ४. ३०. १८ ; ५. ५३. ९ ; १०. ६४. ९. ) तत्र सर्वत्रैव सिन्धुसङ्गता तक्षशिलानामनगरीतलवाहिन्येव गम्यते । अपि यच्छ्रूयते वाजसनेयसंहितायाम्— "काम्पिल्यवासिनी"—इति ( २३. १८. ) सैषा काम्पिल्यनगरी प्रवराध्यायवचनात् दशार्णप्रदेशतः प्रागिति गम्यते, अद्यापि कम्पिलेत्येव प्रसिद्धा दक्षिणपाञ्चालस्था । माक्षाश्वनगर्यपि तत्रैकत्र्येऽस्ति । बृहदारण्योक्तः कपिप्रदेशोऽपि ( ३. ३. १ ; ७. १. ६. ५. १. ) तत्सन्निहित एव । इतिहासवर्णिता यक्षु-वक्षु-सीता-गौर्यादयस्तु आर्यपरिव्राजकविज्ञाता अपि नास्मत्पूर्वतनार्याणां निकेतनभूमयः । तत्वतो या पुनर्नद्यो हिमवत्पृष्ठोत्तरभागतः प्रवहमानाः प्राच्यप्रतीच्योदीच्यभूखण्डगताः, ताः सर्वा एवान्यदेशीयाः इति ध्रुवम् ; अपि यास्तु हिमवत्पृष्ठदक्षिणभागतः प्रवहमानाः प्रागपाग्भूखण्डगतास्ताः सर्वा अस्मद्देशीया एव ; विन्दुसरोमानससरोरावणह्रदादयोऽप्यार्यपरिव्राजकपरिचिता अपि नास्मद्देशीयाः किं मत्र चिन्तनीय मस्ति । शर्यणावत्सरस्तु नून मार्यावर्त्तीयम् । तदाहुः शाट्यायनिनः— "शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्द्धे सरः स्यन्दते"—इति ऋ० सं० १. ८४. १३ सा० भा० द्रष्टव्यम् ।

अपि श्रूयते मन्त्र एषः ( ऋ० सं० १०. ३४. १. )—

"प्रावेपा मा बृहतो मादयन्ति
प्रवातेजा इरिणे वर्वृताना: ।
सोमस्येव मौजवतस्य भक्षो
विभीदको जागृविर्मह्य मच्छान्"–इति ।

'प्रावेपा:' सततकम्पनशीलपत्रा:, 'प्रवातेजा:' अपरवन-स्पत्यादिशून्ये बहुवायुयुते प्रान्तरे जनिष्णव:, 'इरिणे' इरानन्नाम-पारस्यदेशे 'वर्वृताना:' अधिकतया वर्त्तमाना:, 'बृहत:' विभीदक-वृक्षा: 'मा' मां मादयन्ति । 'जागृवि:' भक्षयितुर्जागरणहेतु:, 'विभीदक:' कोष्ठगस्य मलस्य वायोश्च भेदनकारी, अयं 'मौजवत:' मूजवन्नामपर्वतोत्पन्नस्य सोमस्य 'भक्ष:' भक्ष्योऽंश: 'इव' 'मह्यम्' 'अच्छान्' छदयति, मोहयतीति तदर्थ: ।

इरिण मित्यस्य यास्केन द्विविधा व्याख्या कृता— 'इरिण मृणातेरपार्णं भवति, अपरता अस्मादोषधय इति वा'–इति (६. १. ८.)। तयोराद्योऽर्थ एवात्र उपपद्यते; तद्देशीयानां हि भारतीयाना मिव पुत्रपौत्रादिष्वपि पितृऋणं न सङ्क्रमत इति दर्शनात् । मूजवान् पर्वतस्तु कैलाशगिरे: पश्चिमस्थोऽद्यापि ।

तदेव ऋक्संहिताकाले ईरान्-नाम-जनपदस्य चार्य्यावर्त्तीयत्वं तथा मूजवतोऽपीति स्वाम्नातव्य मिति ।

अथर्वसंहिताया: पञ्चमकाण्डीयचतुर्दशचर्चदाविंशतितमसूक्तस्य तृतीयमन्त्रे परुषनामजनपदस्य, चतुर्थे महावृषप्रदेशस्य, पञ्चम-सप्तमयो: मूजवत्प्रदेशस्य बह्लिकदेशस्यापि, अष्टमे पुनर्महावृषमूज-वतो:, नवमे पुनरेव बह्लीकस्य, चतुर्दशे त्वन्तिमे अङ्ग-मगध-मूज-वद्-गन्धारीणां च श्रवण मस्ति; पर मुक्ता इमे सर्व एव जनपदा-स्तदानी मासन्ननार्यवासा इति च गम्यतेऽत्र एव; न ह्यन्यथैषु

तक्मस्थापन मभीष्टं भवेदिति । तद्यथा तच्चतुर्थमन्त्र एषः—

"गन्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो मगधेभ्यः ।

प्रैष्यं जन मिव शेवधिं तक्मानं परिदद्मसि"—इति ।

न ह्यार्यवास्तव्येषु तक्मस्थापन मिष्टं स्यादाथर्वणिकानामार्याणाम् ।

नन्वेवं परुष-(पेशावर) देशस्य गान्धार (कन्दाहार) प्रदेशस्य, पूर्वमुक्त मार्यावर्त्तान्तर्गतत्वं किं न विरुध्येत ? अत्र ब्रूमः ;—तयोरार्यावर्त्तान्तर्गतत्वेऽपि एतन्मन्त्रदृक्-कालेऽनार्यवासत्वे कोऽस्ति बाध इति, कालभेदात् सर्वसामञ्जस्यं भवेदेवेति । न चैव मप्यथर्वसंहिताया ऋक्संहितातो विभिन्नकालिकत्वं मन्तव्यं स्यात् ; मन्त्राणा मेव प्रकाशकालपार्थक्यस्वीकारात् तदुपपत्तेः । स्वीकृतञ्चैतदस्माभिर्निरुक्तालोचने (ठ पृ०) 'वस्तुत एक एव वेदः'—इत्यारभ्य (ठू पृ०) 'चत्वार एव वेदास्त्रयीशब्दवाच्याः'—इत्यन्तेन, पुनः (तू पृ०) 'यास्केन'—इत्यारभ्य (ते पृ०) 'पुरा तु बहुकाल मभिव्याप्य बहुभिर्ऋषिभिर्बहुभिरेवोच्चावचैरभिप्रायैः प्रणीता बहवो मन्त्राः'—इत्यन्तेन च ।

प्रदर्शितं मूजवन्नाम तु ऋक्संहितायां (१०. ३४. १) श्रूयत इति सत्यम् ! परं न तथापि मूजवत्पर्वतस्यार्यावासत्वं मन्तव्य मेव ; तेन हि तत्रत्यसोमाना मौत्कर्षमात्रप्रतीतेः । यच्चाथर्वणिकाम्नानम्— "उदङ् जातो हिमवतः स प्राच्यां नीयसे जनम्"—इति (५. ४. ८.), अस्माच्च तत्रत्यकुष्ठस्यौत्कर्षमात्रं गम्यते, न त्वन्यत् । सोमस्यानार्याधिकृतत्वन्तु ऐतरेयब्राह्मणेऽपि सुव्यक्तम् । एवं महावृषस्यापि सिद्धान्तः कृत एव । श्वेतपर्वतादपि प्रतीच्यस्य बह्लिकस्य तु यदार्यावासत्वं प्रतीयते "बह्लीकः प्रातिपीयः शुश्राव" —इत्यादि (शत० ब्रा० १२. ९. ३.) श्रुतितः, तस्यापि कालभेद-

व्यवस्थैव स्वीकार्या ; अपिवा तस्यार्याभिजनत्वे तु न कमपि बाधं पश्यामः। अङ्गराज्यस्य चासीत् तदानी मनार्यत्त्व मेव ; कुरुराजदुर्योधनकालत एव तस्याभवदार्यावर्त्तान्तर्गतत्वम्। मगधस्य त्वनार्यवासत्वेन निन्दाश्रूयते। तथाहि (ऋ० सं० ३. ५३. १४.)—

"किं कृण्वन्ति कीकटेषु गावो
नाशिरं दुह्रे न तपन्ति घर्मम्"–इति।

निरुक्तकारेण चैतद्व्याख्याया मुक्तम्— "कीकटो नाम देशो ऽनार्यनिवासः"–इति (६. ६. ४.)। कीकट एव मगधः ; अस्ति हि स्मृतिवचनम्— "कीकटेषु गया पुण्या, पुण्या नदी पुनपुना। च्यवनस्याश्रमं पुण्यं पुण्यं राजगृहं वनम्"–इति, गयादयस्तु मगधराज्यान्तर्गता इति प्रसिद्ध मेवेति॥

तत्वतो हिमवत्पृष्ठमध्यस्थो मूजवान्नाम नगराजस्तु स्यादार्य-वासोऽनार्यवासो वा, पर मासीत् पुराऽऽर्यावर्त्तोत्तरसीमेति तु मन्तव्य मेव। अत एव वाजसनेयिनः समामनन्ति— "एतत् ते रुद्रावसम्, तेन परो मूजवतोऽतीहि"–इति (सं० ३. ६१.)। एतस्यापि यजुषो व्याख्यान कृतं शतपथे। तथाहि— "अवसेन वा अध्वानं यन्ति, तदेनं सावस मेवान्ववार्जति यत्र यत्रास्य चरणं, तदन्वत्र ह वा अस्य परो मूजवतोऽतीहि"–इति (२. ६. २.१७)। तदेव मत्र मन्त्रे रुद्रनामक्रूरदेवताया मूजवतः परपारे गमनप्रार्थनात आर्यावर्त्तत एव दूरे गमनं प्रार्थितं गम्यते॥

तदेव मद्यतन पारस्यराज्यपश्चिमोत्तरस्थेशियामाइनरतः प्राक् प्रत्यगनुगङ्गप्रदेशात्, उदक् सिन्धुसागरसङ्गमात्, अवाक् च मूजवतश्चाय मार्यावर्त्तः संहिताकालीन इति निष्पद्यते॥

आर्याधिकारस्त्वितोऽप्यन्यत्रावस्थित इत्यन्यदेतत्। तद्यथा (ऋ० सं० ७. १८. १९.)—

"आवदिन्द्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत्।
अजासः शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि"—इति।

अस्यार्थः।— यः 'इन्द्रः' सम्राट् 'अत्र' राज्ये 'सर्वताता' सर्वकर्मसु 'भेदं' राजप्रजयोर्विचारादिवैलक्षण्यं 'प्रमुषायत्' प्रमुष्णाति प्रच्छिन्नीकरोति, एवं कृत्वैव सर्वाः प्रजाः 'आवत्' अवति, तम् 'इन्द्रं' सम्राजं 'यमुनाः', 'तृत्सवः', 'अजासः', 'शिग्रवः', 'यक्षवः' 'च' यामुनप्रदेशादिवासिनः सामन्तराजानः 'अश्व्यानि' अश्वादिवाहितानि, 'शीर्षाणि' शीर्षतः प्रवाहितानि 'च' 'बलिम्' उपढौकनं 'जभ्रुः' प्रददुरिति।

अस्या ऋचि श्रुताः यामुनादयः सर्व एव जनपदाः तदानीन्तनार्यावासतोऽद्यतनादस्मादार्यावर्त्ततश्च बहिर्भूता एव स्युः। अत्रोभयत्रास्ति च किञ्चिद् विचार्यम्। गङ्गायाः प्रत्यक्पार्श्वस्थिता एषैव यमुना अस्या ऋचि श्रुता, उतान्येति? अस्मन्मते त्वन्यैव। शिग्रुजनपदोऽपि स्याच्चन्द्रभागाप्रभवोर्ध्वगतादन्य एवेति। अपि वा आर्यावर्त्तीयावप्येतौ तदानीं करदप्रदेशाववेत्यपि किं चित्रमिति॥

अथैतरेयकाले अय मार्यावर्त्त आसीद् यादृगायतनः, तदपि किञ्चिदवगम्यते एतद्ग्रन्थत एव। तथाहि श्रूयतेऽत्राभिषेकप्रकरणे —"प्राच्यां दिशि ये के च प्राच्यानां राजानः०—० दक्षिणस्यां दिशि ये के च सत्वतां राजानः०—० प्रतीच्यां दिशि ये के च नीच्यानां राजानो येऽपाच्यानां०—० उदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्राः०—० ध्रुवायां मध्यमायां प्रति-

ष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायैव तेऽभिषिच्यन्ते”–इति ( ८. ३. २. )।

अत्र, ‘प्राच्यानां राजानः’–इति सामान्येन श्रवणादवगम्यते न तदानीं प्राच्यां दिशि प्रबलः कश्चिदासीन्नरपतिः, प्रत्युतासन् क्षुद्र-राजानो बहव इति। अत एव श्रुत मत्रैवान्यत्र “प्राच्यो ग्रामता बहुलाविष्टाः”–इति ( ३. ४. ६. )। तदानीं प्राग्देशीय-पार्वत्य-जनपदो य आसीदासंहिताकालात् प्रसिद्धोऽद्यतन-नयपालादि-किरातनगरादिकः तत एव सोमवल्लीनां क्रयो विहितस्त्वात्रैतरेयके–“प्राच्यां वै दिशि देवाः सोमं राजान मक्रीणन्”–इति ( १. ३. १. )। तदेवं पाणिन्यागमतोऽपि हि येषां कान्यकुब्जा-हिच्छत्रादीनां प्राच्यभूमौ विद्यमानतोपलभ्यते ( १. १. ७५. ), ऐतरेयकाले तु तेषा मासीद्वा ग्रामत्व मेवेति।

दक्षिणस्यां तदानी मासीदेकं सत्वद्राज्य मेव बलवत्तमम्, तदे-वेदानीं छत्रपुरित्याख्यायत इतिस्यात्। तदेतत् “आदत्त यज्ञं काशीनांभरतः सत्वता मिव”–इति ( शत० ब्रा० १३. ४. ५, २१.) गाथावचनश्रुतेरेतदैतरेयतोऽपि बहुप्राचीनतरं भरताधिकृतत्वासी-दिति गम्यते। स्याद् दौष्यन्ति-भरतेन तत् स्थापित मिति तद्वं-श्याश्चिर मेव भरता इत्येवोच्यन्ते, दृष्टश्चैतदैतरेयेणापि भरताधिकृत मेवेति। अतएवेहान्यत्र श्रुतम्—“तस्माद्वाप्येतर्हि भरताः सत्वनां वित्तिं प्रयन्ति”–इति ( २. ४. १. )। अन्यच्च “तस्मादिदं भरतानां पशवः सायङ्गोष्ठाः सन्तो मध्यन्दिने सङ्गविनी मायन्ति”–इति ( ३. २. ६. )। अनयोः श्रुतिवचनयोः ‘आयन्ति’ ‘प्रयन्ति’–इति वर्त्तमानकालिकप्रयोगदर्शनात्, ‘इदम्’–इत्यङ्गुल्या निर्देशा-च्चावगम्यतेऽनेनैतरेयेण स्वय मपि दृष्टं स्यात्तद्राज्यं भरतवंशीय-

शासनाश्रित मिति। तस्य च दौष्यन्तेर्भरतस्य राज्ञः कीर्त्तिकथा बहुप्राचीना इत्येवैतरेयादिषु गाथेति व्यपदिष्टा। तद्यथैतरेये (८. ४. ९.) "तदप्येते श्लोका अभिगीताः—

हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो मृगान्।
मष्णारे भरतोऽददाच्छतं बद्वानि सप्त च।
भरतस्यैष दौष्यन्तेरग्निः साचीगुणे चितः।
यस्मिन्त्सहस्रं ब्राह्मणा बद्वशो गा विभजिरे।
अष्टासप्ततिं भरतो दौष्यन्तिर्यमुना मनु।
गङ्गायां वृत्रघ्नेऽबध्नात् पञ्चपञ्चाशतं हयान्।
त्रयस्त्रिंशच्छतं राजाश्वान् बध्वाय मेध्यात्।
दौष्यन्तिरत्यगाद्राज्ञो मायां मायवत्तरः।
महाकर्म भरतस्य न पूर्वे नापरे जनाः।
दिवं मर्त्य इव हस्ताभ्यां नोदापुः पञ्चमानवाः"—इति।

शतपथेऽप्येव मेव श्रूयते प्रायः— "तदेतद् गाथयाभिगीतम्" —इत्यादि (१३. ५. ११-१४.) द्रष्टव्यम्।

प्रतीच्यां दिशि तु नैक मप्यासीत् सुसमृद्धं राज्यम्, अप्यासं-स्तूत्तरभागे पर्वतपादस्थभूमिपाः 'नीच्याः' केचनाप्रसिद्धराजानस्तथा दक्षिणभागेऽप्यवाच्याः केचन, मध्यभागे त्वरण्यभूमय एवेत्युक्त मिह नीच्याना मपाच्याना मिति। इहैवान्यत्र श्रूयते "प्रत्यञ्चि दीर्घा-रण्यानि भवन्ति"—इति (३. ४. ६.), "प्रतीच्योऽप्यापो बह्व्यः स्यन्दन्ते"—इति (१. २. १.) च।

उदीच्यां तु हिमवत्पृष्ठदण्डस्योत्तरे भागे आर्यावर्त्ताद् बहि-र्विद्यमानावपि आर्यमित्रजनपदाविमौ उत्तरमद्राः उत्तरकुरवश्चेति श्रूयेते। एवं हि गम्यते— यथैव हिमवतो दक्षिणभूभागोऽय

मार्य्यावर्त्तो मद्रदेश-कुरुदेशाभ्या मासीत्तदानीं द्विधा विभक्तः, तथैव हिमवत उत्तरभूभागश्च स मद्रदेश-कुरुदेशाभ्या मासीत् पुरा द्विधैव विभक्त इति। आर्य्यावर्त्तीयमद्रदेशादुत्तर इति उत्तरमद्र इत्युच्यते सः, आर्य्यावर्त्तीयकुरुदेशादुत्तर इति उत्तरकुरुश्चेति। आर्य्यावर्त्तीयप्रत्यन्तदेशेभ्यः परस्तात् ये देशा महादेशा वा सन्ति, न तेषु मन्वाद्युक्तार्य्यानार्य्यनामादिसम्भव इत्युक्तं पुरस्तात् (१७ पृ० १६ पं०)। तथा च तद्देशवासिना मार्य्यत्व मनार्य्यत्वं वा नैव विचार्य्य मस्ति; परमुत्तरकुरुदेशस्य नैसर्गिकसौन्दर्य्यस्वास्थ्यकरत्वादितः, तद्देशवासिनाञ्च शान्तिप्रियत्व-तपःपरायणत्वादिदेवस्वभावदर्शनात्, पुण्यमयत्वं देवचेतत्व मजेयत्वञ्च। तथाहि ऐतरेयकम्— "देवचेत्रं वै तन्न वैतन्मर्त्त्यो जेतु मर्हति"—इति (८. ४. ८.)। तेषां शान्तिप्रियत्वादिस्वभाव एवाजेयत्वे हेतुः प्रबलः। तदुक्तं महाभारतीय-सभापर्व्वणि चार्जुनदिग्विजये—

"तांस्तु सान्त्वेन निर्जित्य मानसं सर उत्तमम्। ऋषिकुल्यांस्तथा सर्वान् ददर्श कुरुनन्दनः॥ × × ×॥ तत एवं महावीर्य्यं महाकाया महाबलाः। द्वारपालाः समासाद्य हृष्टा वचन मब्रुवन्॥ पार्थ! नेदं त्वया शक्यं पुरं जेतुं कथञ्चन। उपावर्त्तस्व कल्याण पर्य्याप्त मिद मच्युत॥ × × ×॥ न चापि किञ्चिज्जेतव्य मर्जुनात्र प्रदृश्यते। उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्त्तते॥ × × ×॥ अथेह पुरुषव्याघ्र! किञ्चिदन्यच्चिकीर्षसि। तत् प्रब्रूहि करिष्यामो वचनात् तव भारत॥ ततस्तानब्रवीद्राजन्नर्जुनः प्रहसन्निव। पार्थिवत्वं चिकीर्षामि धर्म्मराजस्य धीमतः॥ न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मन्यसे। युधिष्ठिराय यत् किञ्चित् करपण्यं प्रदीयताम्॥ ततो दिव्यानि

वस्त्राणि दिव्यान्याभरणानि च। क्षौमाजिनानि दिव्यानि तस्य ते प्रददुः करम्"—इति २८ अ० ४–१६ श्लो०। तदिदं महानगरं सम्प्रति तीब्बदित्युच्यते, स्थौल्यवदिति तदर्थः; एतद्देशीया हि प्रायशः स्थूलनासिकोदरजङ्घा भवन्ति।

अस्ति चान्यः कुरुवर्षः; स नूनं मेरुसन्निहितः, 'शान्तपितृवर्ग'-प्रभृति 'सुवीर्य्य'—देशान्तः, योऽय मद्यतन-सेण्टपिटर्स्बर्गादिसाइ-वीरियान्तः। तस्य स्वर्गत्वेन वर्णनञ्च महाभारतरामायणादौ बहुत्र। तद्यथा महाभारतीयानुशासनपर्वणि— "अहो सह शरीरेण प्राप्तोऽस्मि परमां गतिम्। उत्तरान् वा कुरून् पुण्यानथ-वाप्यमरावतीम्"—इति (५४. १६)। पुनस्तत्रैव— "नैवेशिकं सर्व-गुणोपपन्नं ददाति वै यस्तु नरो द्विजाय। स्वाध्यायचारित्र-गुणान्विताय तस्यापि लोकाः कुरुषूत्तरेषु"—इति (५७. ३३.)।

अथ यदिह 'मध्यमायां दिशि'—इति, ततो गम्यते कुरुपञ्चा-लादयश्चत्वार एवैते प्रदेशा स्तदानी मासन् मध्यदेशाः, आर्या-वर्त्तस्य मध्यभूभागा इति यावत्। तत्र च यच्छ्रुतो वशो देशः, स एव स्यात् महाभारतादिप्रसिद्धः 'शिविः'। किञ्च य एते 'ध्रुवायां प्रतिष्ठायाम्' इति द्वे पदे तद्विशेषणे श्रूयेते, ततो ज्ञायते चात्रैव मध्यार्यावर्त्ते तदानीन्तनसम्राजा मासीद्राज-धानीति। एवञ्च कुरु-पञ्चाल-शिवि-सौवीरप्रदेशात्मकमध्यदेशत एवात्र प्राच्यादयो दिशोऽभीष्टा इत्यपि नानवगतम्॥

तदेव मैतरेयकाले हिमवद्दक्षिणपार्श्वनिम्नस्थं किरातजाति-निकेतनं किरातनगर मेवासीत् आर्यावर्त्तस्यास्य पूर्वप्रत्यन्तः, दक्षि-णस्यां भरतवंशीयाधिकृतं सत्वद्राज्य मप्यासीदार्यावर्त्तान्तर्गतम्, पश्चिमस्यां गिरिगिरिनदीग्रामसीमानां प्राचुर्यवर्णनात् गान्धार-

देशादिभ्यः परस्तादप्यासीदार्य्यवास इति गम्यते, उत्तरस्यान्तूत्तर-कुरूणा मजेयत्वेन वर्णनात् ततोऽर्वागेवासीदार्यावर्त्तोत्तरसीमेति च प्रतीयत एवेति। एकत्र चात्र श्रुतम्—"त एतेऽन्ध्राः पुण्ड्राः शवराः पुलिन्दा मूतिवा इत्युदन्त्या बहवो भवन्तीति" ( ७. ३. ६ )। तत्र 'एते'–इति इदं शब्दव्यवहारादैतरेयकालेऽप्यासन्निमा जातय इति, 'उदन्त्याः'–इत्युक्तेः प्रत्यन्तवासीनोऽनार्या इति च गम्यते। तथाचैषां देशाना मनार्य्यभूत्वाभिधानादेषा मन्तःस्थिताः प्रदेशा एवासन् तदानी मार्य्यभूमय इति सुवचम्। अन्ध्रजातयोऽधुना दाक्षिणात्येषु प्रसिद्धा, पुण्ड्र इति त्विदानीं 'दीनाजपुर'–इति प्रत्न-तत्त्वानुसन्धित्सवो वदन्ति, एवं शवरपुलिन्दमूतिवाः विन्ध्यगिरि-वासिनो म्लेच्छजातिविशेषास्त्वद्यापि प्रायः प्रसिद्धा एव। तदेवं न तदाप्येष आर्यावर्त्तः प्राच्या मतिविस्तृत इत्येवास्माकम् ॥

अथ श्रूयते ह्येतद् विदेघमाथवाख्यानं शतपथे १ का० ३ प्र० ३ ब्रा० १०–१९ क० "विदेघो ह माथवोऽग्निं वैश्वानरं मुखे बभार ०—० स इमाः सर्वा नदीरति ददाह सदानीरेत्युत्तराद् गिरेर्निर्द्धावति ताᳬ हैव नातिददाह, ताᳬ ह स्म तां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाग्निना वैश्वानरेणेति। तत एतर्हि प्राचीनं बहवो ब्राह्मणास्तद्धाक्षेत्रतर मिवास स्रावितर मिवास्वदित मग्निना वैश्वा-नरेणेति। तदु हैतर्हि क्षेत्रतर मिव ०—० सैषाप्येतर्हि कोशल-विदेहानां मर्यादा, ते हि माथवाः ०—० स मे मुखान्निरपादीति" –इति। एतस्मादाख्यानात् व्यक्त मभिगम्यते, विदेहनाममैथिल-जनपदस्यानतिप्राचीनार्य्यभूत्वम्। परं न तदापि दक्षिणमगधस्यार्या-वर्त्तत्वं सम्पन्नं मन्यामहे वयम्; अनतिप्राचीनपातञ्जलमहाभाष्य-वर्णितार्यावर्त्तलक्षणतोपि दक्षिणमगधात् प्रत्यगेवार्यावर्त्तत्वप्रतीतेः।

अपीह शतपथे (१२. ९. ३. ३.) "वह्निकः प्रातिपीयः शुश्राव"—इति श्रवणात् पश्चिमस्यां तावदप्यासीद् बाह्लीकस्यार्यावर्त्तत्व मिति च स्वीकार्यम्। पाणिन्यागमेऽपि आयुधजीविवाचिपर्श्वादिगणे पठितो बह्लीकः (पा० सू० ५. ३. ११७.)। "कम्बोजाल्लुक्"—इति (पा० सू० ४. १. १७५.) कम्बोजग्रहणञ्च दृश्यते। तत्र सिन्ध्वादिगणेऽपि पठितः कम्बोजः (पा० सू० ४. ३. ९३.)। गणपाठोऽपि पाणिनिनैव कृत इति सिद्धान्तितं भगवता पतञ्जलिना (१. १. ३४.)। महाभारतेऽपि वर्णितौ काम्बोजबाह्लीकौ (द्रो० प० ११७, १५५ अ०)।

अथ भगवता यास्केनापि "कम्बोजाः कम्बलभोजाः कमनीयभोजा वा; कम्बलः कमनीयो भवति"—इति कम्बोजशब्दो निरुक्तः (२. १. ४.)। "प्रकृतय एवैकेषु भाष्यन्ते विकृतय एवैकेषु"—इत्याद्युक्त्वा तदुदाहरणाय प्रोक्तं चैतत्—"शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते ०—० विकार मस्यार्येषु भाषन्ते शव इति; दातिर्लवनार्थे प्राच्येषु, दात्र मुदीच्येषु"—इति (२. १. ३, ४.)। पातञ्जले महाभाष्ये प्रस्पशाया मप्येव मेव।

अपि तत्र पातञ्जले आर्यावर्त्तस्यास्य चतुःसीमनिरूपण मेवं कृतम्।—"कः पुनरार्यावर्त्तः? प्रागादर्शात्, प्रत्यक् कालकवनात् दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रम्"—इति (२. ४. १०.)। अत्राह तट्टीकाकारः कैयटः—"आदर्शादयः पर्वतविशेषाः"—इत्येव। "जनपदतदवध्योश्च (पा० सू० ४. २. १२५.)"—इतिसूत्रस्योदाहरणभूतं यदिदं मादर्शक इति पदं लभ्यते, इतो ज्ञायते अस्त्यादर्शनामा कश्चित् सीमपर्वत इति। सोऽय मादर्शः स्यादञ्जनपर्वतः; तत्पदनिरुक्तितस्तथैवावगतेः। स चेदानीं

सुलैमानित्युच्यते। स हि शतपथब्राह्मणश्रुतश्वेतगिरिरेव दक्षिणांशः। एवञ्च पतञ्जलिकालेऽपि स एव श्वेतगिरिरिवासीदार्यावर्त्तस्य पश्चिमसीमेत्यनुमान मपि न स्यादसङ्गतम्। तदानीन्तनार्यावर्त्तस्य पूर्वसीमभूतं कालकवनं तु स्यात् धर्मारण्यतः प्राग्विद्यमानं दक्षिणमगधस्य प्रत्यक् स्थितं वकासुर-(बक्सर)-प्रदेशीयं ताड़कवनम्। पुरासीत् तद्धि कालयवनाश्रितम्; तत्प्रभृत्येव तस्य कालवनं कालकवनं वेति च नाम सम्पन्नम्। हरिवंशोल्लिखितस्य विष्णुपुराणोक्तस्य च (५. २३. ५.) तस्य कालयवनस्य मगधराजजरासिन्धुमित्रत्वेन वर्णनात् कालवनमगधयोः सामीप्यानुमानं स्याच्च सङ्गतम्। अत एव प्राच्यमगधस्य अनार्यवासत्वेनोल्लेखोऽपि तस्यैतस्य पतञ्जलेः सङ्गच्छते। तथाहि— "हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमगधेषु; गमि मेव त्वार्याः प्रयुञ्जते"—इति (म० भा० पस्पशा०)। तदेवं तदापि सौराष्ट्रजनपदस्य, तथेदानीं पटनेत्यादिप्रसिद्धानां प्राच्यमगधीयकुसुमपुरादीनाञ्च आर्यावर्त्तसीमतो वहिःस्थितिरासीदित्यत्र नास्ति संशयलेशोऽपीति।

अथात्र भगवान् मनुस्त्वाह—"आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः" —इति (२. २२.)। 'तयोः गिर्योः' पूर्वोपात्तयोः हिमवद्विन्ध्ययोः। तदित्थं पूर्वापरसमुद्रव्याप्येष देशो मनोः सम्मतः। तत्र पूर्वः स्यात् गङ्गासागरसङ्गमः, अपरस्तु सिन्धुसागरसङ्गमः। स एष आर्यावर्त्तः ब्रह्मावर्त्तप्रदेशो ब्रह्मर्षिदेशो मध्यदेशो यज्ञिय देशश्चेति चतुर्विधत्वेन वर्णितस्तेन तत्प्रान्तभूमीनां म्लेच्छभूत्वमुररीकृतञ्च। तद्यथा—

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते॥

कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥
हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः"—इति
(म० २अ० १७, १९, २१, २३श्लो०) ।

अत्र हि ब्रह्मावर्त्त-ब्रह्मर्षि-मध्यदेशास्तु 'यज्ञियाः' यज्ञकार्यार्ह-भूमय एव, तत्र कास्ति विचारणा; निर्द्दिष्टेभ्य एभ्यो बहिरपि आर्यावर्त्तान्तर्गताः सिन्धुसौवीरकाश्यादयो देशा अपि यज्ञानुष्ठानार्ह-भूमय इति 'यज्ञियदेशाः' उच्यन्ते। एतस्माच्चार्यावर्त्ताद् बहिःस्थिताः "किराता यस्यान्ते, पश्चिमे यवनाः स्मृताः। आन्ध्रा दक्षिणतो वीर! तुरस्कास्त्वपि चोत्तरे"—इति (वा० पु० १३. ४०), एव-मादिकाः खोराशान-तुरस्क-पूर्ववङ्गोत्तरवङ्गान्ध्रप्रदेशादयोऽस्यार्या-वर्त्तस्य प्रान्तभूमयः सर्वाः एव म्लेच्छदेशाः; किञ्चार्यावर्त्तान्तर्गता दक्षिणवङ्गाङ्गप्राच्यमगधादयोऽपि कृष्णसारमृगहीनत्वेनायज्ञियत्वात् म्लेच्छदेशा एव।

तत्वतस्तु "तयोरेवान्तरं गिर्योः"—इति मनूक्तेः पूर्वस्यां यावत्येव विन्ध्यगिरेः प्रसृतिस्तावानेव यज्ञिय आर्यावर्त्तः स्वीकार्यः, ततो वहिरार्यावर्त्तत्वेऽपि न त्वस्ति यज्ञियत्व मिति म्लेच्छभूत्व मेव। अत एवाङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च गमननिषेधः सङ्गच्छते; सूचितन्त्वेतत्तत्र मनुनैव "एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः"—इति (२, २४.)। 'एतान्' ब्रह्मावर्त्तादीनित्यर्थः। तथैषु देशेषु पुरा नासन् ब्राह्मणा इति प्रवादोऽप्युपपद्येत। एत-

ह्यपि प्राच्यमगधेषु पटनाप्रभृतिषु, अङ्गप्रदेशेषु भागलपुरादिषु चान्यत आगताः शाकलद्वीपिब्राह्मणाः, तथा वङ्गेष्वत्र कान्यकुब्जादागता एव ब्राह्मणा राढि-वारेन्द्र-वैदिका इति ख्याता वसन्ति, कलिङ्गसौराष्ट्रयोरप्येवम्।

कलिङ्गप्रदेशागम्यत्वं तु पाणिनिसूत्र-तद्वार्त्तिक-तन्महाभाष्येभ्यश्चावगम्यते। तथाहि— अस्ति पाणिनेरेकं सूत्रं "परोक्षे लिट्"-इति (३. २. ११४), अत्र चास्ति कात्यायनवार्त्तिकमिदम्— "अत्यन्तापह्नवे च"-इति, लिट् वक्तव्य इति शेषः, उदाहरणञ्चास्य दर्शितं पतञ्जलिना—"नो कलिङ्गान् जगाम"-इति विवृतं च तत् कैयटेन— "न केवलं तद्देशस्य भोजनादेरपह्नवो यावत् तद्देशगमनादेरपि"-इत्यादि। एष च कलिङ्गप्रदेशोऽप्यार्यावर्त्ताद्बहिरेव संस्थितो मेदिनीपुरादारभ्य तैलङ्गदेशान्तं यावद् विस्तृतः। पुरा आसीदय मुत्कलिङ्ग-मध्यकलिङ्ग-कलिङ्गेति त्रिधा विभक्त इति त्रिकलिङ्गनामा। त्रैलिङ्गनाम तु तत एव समुद्भूतम्, अप्युत्कलिङ्गनामत एवोत्कलनामप्रसिद्धिरित्याहुरैतिहासिकाः। अतएव श्रीक्षेत्रे वर्णविचाराभावस्तद्दोषनिवृत्तये चोत्तरत्र समये केनचिदुत्कलखण्डप्रणयनञ्चेति सम्भाव्यते।

अथामरसिंहोऽपि प्राच्योदिच्यमध्यम्लेच्छेति चतुर्विभक्त मार्यावर्त्तदेशसंस्थान मश्लोकयत्। तद्यथा— "आर्य्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः"-इति (२. १. ८.)। तत्र "शरावत्यास्तु योऽवधिः। देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः। प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः इति (२. १. ६, ७.)। प्राक्सहितो दक्षिणो देशः 'प्राग्दक्षिणः', एवं पश्चिमसहित उत्तरदेशः 'पश्चिमोत्तरः', अन्तं प्रति गतः 'प्रत्यन्तः' सीमान्त-

प्रदेश इति, तदर्थः । तदित्थ ममरसिंहकाले 'शरावती'-नाम-नद्येवासीत् प्राच्योदीच्ययोः सीमेति गम्यते । अत एवोक्तं काशिकावृत्तौ ( पा० सू० १. १. ७५. )—

"प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती"-इति ।

अथात्र युरोपीयभ्रातरः केचन सम्प्रवदन्ते । श्रूयते हि ऋक्-संहितायाम्— "अनु प्रत्नस्यौकसो हुवे"-इति ( १. ३०. ६. ), तेनावगम्यते सारस्वतप्रदेशीयार्याणा मादिपुरुषाणां वास आसीत् पुरा क्वचिदन्यत्रैवेति । तत्रार्याणा मादिनिकेतन मस्यैवासिया-खण्डस्य मध्यभागस्थितयोर्बेलुर्त्तागमुश्ताग्पर्वतयोः पश्चिमपार्श्व-गताधित्यका भूमिः, तत एव भारतीयाः पारसिकाः शर्म्मण्यादयश्च विकीर्णा भारतादिष्विति ।

वय मत्र ब्रूमः ;—भारतीयपारसिकशर्म्मण्यादीना मार्यमूलत्वे-नैकजातिप्रभवत्वन्तु स्यात् स्वीकार्य्यम् , किन्त्विहौपनिवेशिका वय मिति नैव मन्तव्य मस्माकम् ; स्वदेशस्वत्वहान्यादिदोषत्रयप्रसङ्गात्, तेषां तन्मतपोषकप्रमाणहेतूना मतिदौर्बल्याच्चेति ।

ते त्रयो दोषाः खल्वेते—नैष देशोऽस्माकं पैतृकोऽपि तु यथा-भवद्यवनाना मधिकृतोऽद्य चैंलण्डीयानाम् , तथैव पुरास्मत्पूर्व-पुरुषैरत्रत्याननार्यान् विजित्य बलाद् गृहीत इति । एतेनास्मिन् देशेऽस्माकं मूलस्वत्वं कदापि नास्ति , प्रत्युत यथा पूर्वं यवनानां जयलब्धं स्वत्वं सम्पन्न मद्य चैंलण्डीयानाम्, तथैवैकदास्माक मपि बभूवेत्येवेति प्रथमो दोषः । तदनु सम्प्रत्यत एवास्माकं यहुद्यादीना मिवौपनिवेशवासित्व मिति द्वितीयो दोषः । स्वार्थानुरोधतः

स्वावासकण्टकभूताना मेतद्देशीयमूलस्वत्ववता मनार्याणा मुच्छेदन-ञ्चेति तृतीयः। यदि हि तेषां तन्मत मस्माक मृत मित्यभिमतं स्यात्, तर्ह्येते त्रयोऽपि दोषा गलेकुठारन्यायेन मन्तव्या एव स्युः। न च तथा। प्रत्युत दृश्यते हि न कश्चित् स्वावासभूमिस्थतुरङ्गुल-भूमिस्वत्व मपि त्यक्तु मुत्सहते, तद्वय मिहार्यावर्त्ते चिर मासृष्टे-र्निवसन्तोऽपि तद्विरुद्धप्रबलप्रमाण मन्तरा कथङ्कारं नाम पैतृकं स्वत्व मुत्सृजन्तोऽत्र दोषभावं व्रमामहे ? अपि राजशासनतोऽन्नाभा-वादितो विपुलार्थार्ज्जनस्पृहासन्ताडनादितो वा ये केचनार्या अनार्याश्च स्वदेशाद् वहिर्भूता औपनिवेशिकत्व मापन्ना आपद्यन्ते वाद्यापि, अस्तु तेषां तथात्व मदोषाय; अतथाविधाना मस्माकं विषये तेषां तथाविधजल्पनं कथं न नो हृदयं व्यथयेत्? एवं दुर्बलाना माद्यानार्याणां प्राणादिसम्पीड़नेनैवास्मत्पूर्वपुरुषा इह वासस्थान मालेभिर इत्यनृत मपि यद्युतायेत, तर्ह्येष तत्कलङ्कप्रवादः कथं न भवेद् दोषायेति च हृदयवद्भिः सुधीभिरेवाकलनीयम्॥

सन्ति चात्र तेषां तन्मतपोषका येऽष्टावनुमानहेतवो लिखिताः, तेष्वेकोऽपि न विचारसह इत्यस्माकम्। तद्यथा—

(१) 'एशियाखण्डतः प्रोषिता एवार्य्याः कालेन सर्व्वं च यूरोप-खण्डादौ बभुवुः कृतवास्तव्याः'—इत्येव मस्त्येकः प्रवादः, अतोऽव-गम्यते नूनं मासीदार्य्याणा मादिवासः प्रथम मेशियाखण्डमध्य-भूभाग इति तेषां तथाविधानुमानस्याद्यहेतुवर्णनम्। अत्र ब्रूमः— जागर्त्तु स प्रवादस्तेन किम्, तथा स्वीकारेऽपि न भवेदस्माकं भूस्वत्वनाशः; आर्यावर्त्तस्यास्य चैशियाखण्डीयभूभागत्वात्,— निरवसितास्त्वस्माद् विश्वामित्रर्षिपुत्रादयः। तथाहि—"त एतेऽन्ध्रा पुण्ड्राः शबराः पुलिन्दा मूतिवा इत्युदन्त्या बहवो भवन्ति वैश्वा-

भिन्ना दस्यूनां भूयिष्ठाः"—इति ऐ० ब्रा० ७. ३. ६ । अत एव त्वग्दोषदुष्टा भर्तृपरित्यक्ता अत्रिसुता विदुष्यपालेव ग्रीक्‌देशीया अपेलो देवतेति सम्भाव्यते। तदत्र ऋ० सं० ८. ८१ सूक्तव्याख्यानपरं शाट्यायनब्राह्मणं द्रष्टव्यम्।

(२) भारतीयपारसिकैलण्डीयादीनां विभिन्नजातित्वेऽपि भाषासौसादृश्यं दरीदृश्यते, विशेषतः सर्वास्वेव भाषासु शीतर्त्तुनामैकविध मेव प्रायः, तस्माच्चावगम्यते सर्वेषा मेवैषा मेकवंशप्रभवत्वं शीतप्रधानवासित्वञ्चेति तेषां तादृशानुमानप्रवृत्तौ द्वितीयहेतुवर्णनम्। अत्र ब्रूमः— अस्त्वेषा मेकवंशप्रभवत्वम्, अपि स्वीकार्यञ्च स्यात् पुरासीदेषां सर्वेषा मेव हिमप्रधानैकदेशवासित्वञ्च; तेन किम्? शीतप्रधाने तस्मिन् सुवासुप्रदेशे हि तेषा मुक्तसर्वजातिमूलार्याणां वासस्वीकारेऽपि कि मेतन्नोपपद्यते? उपपद्यत इति चेत् कृतं कल्पनाकल्पितसुदूरजन्मजल्पनयेति। अपि पारसिकावेस्ताग्रन्थस्य 'वेन्दिदाद्'-प्रकरणीयाद्याध्याये 'हरख्इति'-नामकस्यैकस्याभ्युदयशालिनो नगरस्य यद् वर्णनं दृश्यते, तन्नून मेतस्य सारस्वतप्रदेशस्यैव; 'सरस्वती'-शब्दस्यैव हि पारसिकभाषायां 'हरख्इति'-व्यवहारः सर्वसम्मतः, सिद्धान्तितश्च तथा क्लार्क् महोदयेनापि ( १८६२ खृ. मु. व्या. ५६–५८ पृ० )।

(३) तत्रैव 'अवेस्ता'-ग्रन्थस्य 'वेन्दिदाद्'-प्रकरणे देशवर्णनप्रसङ्गे 'ऐर्यनम्वेजो'-नामा कश्चिज्जनपदोऽपि वर्णितो दृश्यते। हिमर्त्तुप्रधानश्च स इति चोल्लिखितं तत्र। स एष जनपदः पारसिकाना मादिवास्तव्यः स्यात्, स्वीक्रियते च तथा तैः पारसिकैः। भारतीयपारसिकयोर्वंदनमण्डलसारूप्यात् भाषासादृश्यात्, अग्निपूजकत्वसाम्याच्चैकप्रभवत्वं व्यज्यत एवेति सर्वमूलार्याणा मेवा-

वासभूमिः स्यात् स 'ऐर्यनम्वेजो' जनपद इति तत्र तृतीय-हेतुवर्णनम्। अत्र ब्रूमः— अस्तु पारसिकाना मार्यवंशसमुत्पन्नत्वेनास्मद्भ्रातृत्वम्, स्याच्च स्वीकार्यं तेषा मादिपुरुषाणा मैर्यनम्-वेजोवासित्वम्; न तथाप्यस्माकं तद्देशमूलत्वं भवेदुररीकार्यम्; राजाज्ञादिभिरस्मद्देशतो विताड़ितानां तदादिपुरुषमात्राणां तथात्व-सम्भवात्। एकवंशप्रभवाना मपि हि पूर्वपुरुषाणां नानाहेतुतो नानादेशवासित्वं सम्भवत्येव, सम्भवति च तत्र केषाञ्चित् स्वदेश-वासित्व मपीति सुवच मेव। अपि वा राजतरङ्गिणीवर्णितः 'आर्या-णक'–देश एव 'ऐर्यनम्वेजो'–इति पारसिकनामभागासीत्, स च स्यात् केषाञ्चिदार्याणां वासभूमिः, पारसिकानाञ्चैषां तेभ्य एवोत्पत्तिः स्वीकार्येति सर्वं मवदातम्। स च देशः काश्मीरा-दुत्तरो हिमप्रधानोऽप्यार्यावर्त्तान्तर्गत एव। तथाहि—

"तुषारवर्षैर्बहुलैस्तमकाण्डनिपातिभिः।
आर्याणकाभिधे देशे विपन्नं केचिदूचिरे"–इति (४, ३६७.)।

वस्तुतस्तु ऐर्यनम्वेजोनाम नगरं नाद्य क्वचिदपि केनाप्युप-लभ्यते, पुरा क्वासीत् तस्य विद्यमानतेत्यपि नाद्य यावत् सुनिर्णी-तम्; तदलं खपुष्पपर्यालोचनयेति।

(४) अस्ति चैव मपि प्रवादः— ग्रीक्रोमकजाति–पूर्वपुरुषाः पूर्वोत्तरदेशतः प्रोषिता इताल्यादौ न्यवात्सुरिति। स एष प्रवाद-स्तदैव सङ्गच्छेत, यदि नामासियाखण्डस्य मध्यभूमिरेव तेषा माद्या-र्य्याणां निकेतनं मन्येतेति तत्र चतुर्थहेतुवर्णनम्। अत्र ब्रूमः— पूर्ववर्णितः सुवास्त्वादिप्रदेशोऽपीताल्यादिभ्यः किञ्चिदुत्तरपूर्वगत एवेत्यतस्तत्प्रवादोपपत्तिरुभयत्र समानैवेति।

(५) हिमालयस्योत्तरभागस्य पवित्रतमत्वेन लोकातीतमहिमा-

न्वितत्वेन स्वर्गरूपत्वेन चेदानीन्तनाना मार्याणां स्वीकारात् तादृश-स्थानस्यैतदादिपुरुषाणां वासभूत्वं सम्भाव्यत इति तत्र पञ्चमहेतुवर्ण-नम् । अत्र ब्रूमः— हिमवद्दक्षिणभागस्था आर्याः तपस्साधनादिकं चिकीर्षवश्चिर मेव हिमवदुत्तरभागं गत्वा कृतकृत्या भवन्ति, इत एव तस्य पवित्रतमत्वेन वर्णनम् ; न त्वादिपितृवासनिबन्धन मिति। लोकातीतमहिमान्वितत्वन्तु उत्तराणां कुरूणा मजेयत्वादिश्रवणात एव । हिमवत्पृष्ठस्य स्वर्गरूपत्वं तु पौराणिकम् , उत्तरशब्दमात्रं तद्बीजम् । तदिदं स्फुटं प्रतिपादयिष्यामोऽष्टमे , इह चोत्तरत्र किञ्चिदिति ।

(६) श्रूयते हि कौषीतकब्राह्मणे— "उदीच्यां दिशि प्रज्ञात-तरा वागुद्यते, उदञ्च उ एव यन्ति वाचं शिक्षितुं , यो वा तत आगच्छति , तस्य वा शुश्रूषन्ति इति ह स्माहैषा हि वाचो दिक् प्रज्ञाता"–इति ( १. ७. ६. )। तदेवं कौषीतकब्राह्मणग्रन्थ-प्रवक्तुराचार्यस्य हिमवद्दक्षिणखण्डस्थत्वेऽपि तदादिपुरुषाणां हिम-वदुत्तरखण्डवासित्वेनैषोत्तरदिक्स्तुतिः सङ्गच्छत इति तत्र षष्ठ-हेतुवर्णनम् । अत्र ब्रूमः— ऐतरेये च ब्राह्मणे समाम्नातैतदर्थिका श्रुतिः ; ऐतरेयकाले कुरुपञ्चालशिविसौवीराणां मध्यदेशत्वं पूर्वं वर्णितम् ( ४२ पृ० )। मध्यदेशापेक्षयोद्यानगरस्योत्तरत्वं सर्वै-रप्यनुमन्तव्य मेव। एष एवोद्यानदेशो राजतरङ्गिण्या मुज्जा-नक इत्युक्तः ; तस्यास्य विद्यानिवासत्वेन स्तुतिरन्यत्रापि । स एष काश्मीरसन्निहित उद्याननामजनपदोऽत्रेष्टो विद्यानिलय इति कथं धावेम हिमवतोऽप्युत्तर मिति ।

(७) श्रूयते हि— "तोकं पुष्येम तनयं शतं हिमाः"–इति ( ऋ० सं० १. ६. ८४. ) आशीर्मन्त्रः । तदत्र विवेचनीयम् ,

हिमर्त्तुतोऽब्दपरिगणनं तु तत्रैवोपपद्येत, यत्र प्रदेशे हिमप्रपात-स्यातिशय्यं विद्यते सदैव; नात्र तथोपलभ्यते; अपि त्वासिया-मध्यभूभागस्थो बेलुर्ताग्मुस्ताग्पर्वतयोरन्तरालप्रदेशस्तु नूनं तादृश इति तेषां तत्र प्रबलोऽयं हेतुः सप्तमः। अत्र ब्रूमः— "यदि हि हिमर्त्तुवाचिहिमशब्देनाब्दपरिगणनश्रवणात् हिमशब्दस्याब्दवाचि-त्वेन व्यवहाराद्वा स्यादस्मत्पूर्वपुरुषाणां हिमर्त्तुप्रधानदेशवासित्वानु-मानम्, तर्हि शरदृतुवाचिशरच्छब्देनाब्दपरिगणनश्रवणात् शर-च्छब्दस्याब्दवाचित्वेन व्यवहाराद्वा किं न स्यात् तेषां शरदृतुप्रधान-देशवासित्वानुमानम्? अस्ति तथापि श्रवणं बहुत्रैव। तद्यथा—

"तिस्रो यदग्ने शरदस्त्वा मिद्"–इति ऋ० सं० १. १२. ७२।

"शत मिन्नु शरदो अन्ति देवा:"–इति ऋ० सं० १. १४. ६०।

"शतं नो रास्व शरदो०—०ऽस्यामायूंषि"–ऋ० सं० २. ३. २७।

"अस्मै शतं शरदो जीवसे धा:"–इति ऋ० सं० ३. ३. ३५।

"प्रतिजीवातिशरदः शतम्"–इति च ऋ० सं० १०. ८६. ३९।

वस्तुतस्त्वार्याणां न कदापि हिमर्त्तुमात्रभोगौकस्त्व मासीत्, न च कदापि शरदृतुमात्रभोगौकस्त्वम्; अपि नाम "शर-च्छृता अस्या मोषधयो भवन्ति, शीर्णा आप इति वा"–इति यास्कोक्तेः (४. ४. ४.), शृणाति हिनस्ति प्राणिनः इति शरच्छब्द-व्युत्पत्त्या शरदृतोरस्वास्थ्यकारित्व मासीदार्याचार्यसम्मत मिति तस्यर्तोरब्दान्त्यत्व ममानि तैरिति प्रतीयते। सति चैवं तस्याब्दा-न्तावयवत्वे, हिमर्तोरब्दाद्यवयवत्वं सुतरां सम्पन्नम्। अत एवाब्द-गणनाप्रसङ्गे शरच्छब्दहिमशब्दयोरन्यतरस्य प्रयोगो बहुत्र श्रूयते वेदे, सङ्गच्छते च तयोः शब्दयोर्गौण्या वृत्त्याब्दवाचित्व मपीति।

(८) अपि श्रूयते—"उत्तरं गिरि मति दुद्राव"–इति ( शत०

ब्रा० १. ८. १.)। 'उत्तरं गिरिं' हिमालयम् 'अति' अतिक्रम्य उल्लङ्घ्य 'दुद्राव' द्रुतगमनं कृतवानिति च तस्य तत्सम्मतोऽर्थः। तदस्मादपि वचनात् हिमालय मुल्लङ्घ्य इहागमनं सुव्यक्त मिति तेषां तादृशानुमानेऽष्टमो हेतुः। अत्र ब्रूमः— तस्याः श्रुतेराद्यन्तपर्यालोचनया अतिशब्दार्थालोचनया चैतद्विपरीत एवार्थः प्रतीयते। तथाहि— "स औघ उत्थिते नाव मापेदे। तं स मत्स्य उपन्यापुप्लुवे। तस्य शृङ्गे नावः पाशं प्रति मुमोच। तेनैत मुत्तरं गिरि मतिदुद्राव। स होवाच। अपीपरं वै त्वा। वृक्षे नावं प्रतिबध्नीष्व। तं तु त्वा मा गिरौ सन्त मुदक मन्तश्छैत्सीत्। यावद्यावदुदकं समवायात् तावत्तावदन्ववसर्पासीति। स ह तावत्तावदन्ववससर्प तदप्येतदेवोत्तरस्य गिरेर्मनोरन्ववसर्पणम्"–इति पूर्णं तच्छतपथवचनम्। तदेतत्पर्यालोचनया गम्यते— कदाप्येकदा सम्भूतेऽत्र जलप्लावनेऽस्मादेवार्यावर्त्तीयसमुद्रादुत्थितस्य जलौघस्य हिमालयशृङ्गाधिरोहणम्, उपशान्ते च तदुपद्रवे ततः क्रमादभिसर्पणञ्चेत्येवेति सत्यमतानुकूलैवैषा श्रुतिः। अत एव 'अतिदुद्राव'–इति पदस्य 'अधिजगाम'–इत्यर्थः कृतस्तद्भाष्यकृता हरिस्वामिना। वेदार्थनिर्णयायैव यास्कप्रणीते निरुक्ते त्वभिपूजितेऽर्थेऽतिशब्दो निर्णीतः— "अति सु इत्यभिपूजिते"–इति (१. १. ५.)। 'अतिधनः'–इति, 'सुब्राह्मणः'–इति च तदुदाहरणद्वयम्। अतिशयोऽप्यर्थोऽप्यस्त्यतेर्यास्कीयः। अत एव "अतिमृत्यु मेति"–इत्यादौ (श्वेता० उ० ६. १५.) अतिशयोऽर्थ एव प्रतीयते, नोल्लङ्घनार्थः। "अतिरतिक्रमणे च"–इति पाणिनिसूत्रस्य (१. ४. ५०.) व्याख्यायां ह्याहैव ज्ञानेन्द्रसरस्वती— "अतिक्रमण मुचितादधिकस्यानुष्ठानम्"–इति। प्रकृतौ अतेरुल्लङ्घनार्थत्वस्वीकारेऽपि हिमा-

लयोत्तरवासिनां तेषां दृष्ट्यास्य हिमालयस्य उत्तरगिरित्वं कथं सम्भवेन्नामेति च तैरेव विचारणीयं स्वय मिति दिक् ॥

एव मस्मत्पूर्वपुरुषा: खल्वासन् पुरा सुमेरुप्रदेशवासिन एवेति वालसिद्धान्तोऽपि वालसिद्धान्त: । तथाहि—

उत्तरमेरुप्रदेश एवास्मत्पूर्वपुरुषाणा माद्यार्याणा मासीद् वास्तव्यभूरिति प्रमाणयितुं तेन निष्प्रमाणोऽपि वागाडम्बरो बहु-पन्यस्त: ; तत्र तु प्रमाणपरतन्त्राणां मौन मेव श्रेय: ; ततो यानि तु श्रुतिवचनादीनि प्रमाणत्वेनोपन्यस्तानि, तत्रेदं प्रथमं मन्यामहे वयम्— "अमी य ऋक्षा निहितास उच्चा ,

नक्तं ददृश्रे कुहचिद् दिवेयु: ।

अदब्धानि वरुणस्य व्रतानि ,

विचाकशच्चन्द्रमा नक्त मेति ॥"–इति ऋ० १.२४.१० ।

स्यादस्यैषोऽर्थस्तत्सम्मत:—'अमी' 'ये' 'ऋक्षा:' सप्तर्षय: 'उच्चा' उच्चै: शिर:प्रदेशे 'निहितास:' स्थापिता:, सृष्टिकर्त्रेति शेष: । ते 'नक्तं' रात्रौ 'ददृश्रे' दृश्यन्ते, 'दिवा' 'कुहचित्' 'ईयु:' गच्छेयु:, न दृश्यन्त इति यावत् । 'चन्द्रमा:' अपि 'नक्तम्' एव 'विचाकशत्' प्र-दीप्यमान: 'एति' दृश्यत इति भाव: । तदेवमादीनि 'वरुणस्य' राज्ञ: 'अदब्धानि' कथ मप्यविनाश्यानि 'व्रतानि' कर्माणि , ज्ञेयानीति । एवञ्च शिर:प्रदेशे सप्तर्षिमण्डलावस्थानं गम्यते , तच्च सुमेरावेवोप-पद्यते ; अत एतादृशमन्त्रद्रष्टॄणा माद्यार्यर्षीणा मासीत् पुरा तत्रैवा-वास इति तदभिप्राय: । वयन्तु ब्रूम:— यास्कमते ऋक्षा इति पदेनेह सर्वेषा मेव नक्षत्राणां ग्रहण मिष्टम् ( नि० ३. २० ) ; सर्वेषा मेव तेषां रात्रावेव द्योतमानत्वात् सुसङ्गच्छत एव चात्र

यास्कस्य तन्मतम्। अपि सुमेरुप्रदेशतो नक्षत्राणि उच्चैर्दृश्यमानानि, इतोऽपि उच्चैरेव दृश्यमानानि, कुमेरुतोऽपि तानि उच्चैरेव दृश्यमानानीति तेषा मुच्चैष्ट्वं सर्वत्र प्रत्यक्षम्, किं सुमेरुत एव। न ह्युच्चैःपदेन मस्तकोपरि वर्त्तमानं भ्राम्यमानं वा गम्यते। यद्युच्येत शतपथब्राह्मणे (२. १. २. ४.) ऋक्षशब्दः सप्तर्षिवाचकोऽपि श्रुत इति; तत्रापि नो न क्षतिः। "उत्तरम्, उद्गततरम्"—इत्यादिनैरुक्तवचनात् (२. ३. २) उच्चैष्ट्वनिबन्धन मेवोत्तरनामव्यपदेश इत्यवगमात् उच्चैरित्यस्येह सप्तर्षिपक्षे उत्तरस्या मित्येवार्थः पर्य्यवस्यति; श्रुतञ्च तथा तत्रैव शतपथे तदनुपदम्— "उत्तरा हि सप्तर्षय उद्यन्ति"—इति।

वस्तुत एष मन्त्रो वरुणविज्ञानपरस्ततो वरुणकर्मपरिचायक एव प्रधानतः; तदस्माद् वरुणपदार्थबोधाच्च विलीयत एवैतद् वालविजृम्भितं समन्तात्। तथाहि— "रात्रिर्वरुणः"—इतिश्रुतेः (ऐ० ब्रा० ४. २. ४.) वरुणस्य रात्रिदेवत्वम्, निघण्टौ द्वादशादित्यनामोपक्रमे वरुणशब्दपाठात् सूर्यविशेषत्वञ्च, "येना पावक चक्षसा०—०पश्यन् जन्मानि सूर्य"—इतिस्वोदाहृतश्रुतिव्याख्यानेन भगवता यास्केनापि हि प्रतिपादितञ्च तदेव (१२. ३. ९.); एवं हि रात्रिकालिकोऽधःस्थः सूर्य एव वरुण इति प्रतिपद्यते। एवं वरुणार्थस्वीकारेणैवोपपद्यते वरुणराजकर्त्तृकः सप्तर्षिप्रभृतीनां चन्द्रमसश्च प्रकाशः। परं न चैतद् वचः सङ्गच्छते मेरुप्रदेशवासिनाम्, तत्र सूर्यविशेषस्य वरुणस्य तदधःस्थत्वेन चन्द्रमःप्रभृतीनां प्रकाशकत्वासम्भवात्; प्रत्युत आर्यावर्त्तवासिना मेव सङ्गच्छते। तदित्थ मेषोऽपि मन्त्रोऽस्मन्मतपोषक एव न वेति सुधीभिरेवाकलनीयम्।

तद्धि द्वितीयप्रमाण मप्येव मेव। तथाहि—

अस्त्येक मष्टादशर्च्चं सूर्य्यस्तुनाम सूक्तम् (ऋ० सं० १०. ८८.)। तस्य द्वितीयस्या ऋच: प्रथमार्द्धं एष:—

"स सूर्य: पर्य्युरू वरांस्येन्द्रो ववृत्याद्रथ्येव चक्रा"—इति।

इम मेव मन्त्रांश मवलम्ब्य सुमेरोरार्य्याधिवासभूत्वं प्रमाणयितुं चेष्टितं तेन। तदुक्तम्— मस्तकोपरि रथचक्राकारेण नक्षत्राणां भ्रमणं तत्रत्याना मेव सम्भवतीति। वस्तुतस्तन्मन्त्रस्य व्याख्यानालोचनतो न तादृङ्मतच्छायापि गम्यते; प्रत्युत तन्मतविपरीतं यत् सत्यं तदेव प्रमाणितं भवति। तद्यथा—'इन्द्र:' परमैश्वर्य्यादिगुणयुक्त: 'स:' 'सूर्य:' 'उरू' उरौ विस्तीर्णान्तरिक्षे 'वरांसि' पृथिव्यादिग्रहोपग्रहमण्डलानि 'आववृत्यात्' सदैव आवर्त्तयति। तत्र दृष्टान्त:— 'रथ्या चक्रा इव' यथा अक्ष: मध्यस्थ: सन् रथसम्बन्धीनि चक्राणि भ्रामयति, इतस्ततोविक्षिप्तपतनतस्तानि रक्षयति च, तद्वदिति। एतेन मध्यस्थितसूर्य्याकर्षणशक्तित: सर्वेषां ग्रहोपग्रहाणा मितस्ततोविक्षिप्तपतनराहित्यं भ्रमणञ्चेति विज्ञान मुपदिष्टं भवति। वालमते तु तेषां मस्तकोपरि सूर्यस्याविद्यमानत्वादक्षरूपत्वेन सूर्यस्य मध्यस्थितित्वं कथं सङ्गच्छेतेति पक्षपातशून्या: सुधिय एव विभावयन्तु। सुव्यक्ता अपि श्रुत मक्षरूपेण सूर्यस्य स्थितिवर्णनं तदुत्तरत्र—

"यो अक्षेणेव चक्रिया शचीभिर्
विश्वक् तस्तम्भ पृथिवी मुत द्याम्"—इति।

अस्यार्थ: ।—'य:' सूर्य: 'शचीभि:' आकर्षणक्रियाभि: 'पृथिवीम्' स्वनीचै:स्थितां भूमिम्, ग्रहमण्डलनिम्नार्द्धभागगता मिति भाव:; 'उत' अपि 'द्याम्' स्वोच्चै:स्थितां सुतरां द्युस्थाम्, ग्रहमण्डलोर्द्ध-

भागगता मिति भावः; 'विष्वक्' सर्वतः 'तस्तम्भ' स्तम्भन् वर्त्तते। तस्तम्भेति "छन्दसि लङ्लुङ्लिटः"–इति सार्वकालिको लिट्। तादृशस्तम्भनेन ग्रहाणा मितस्ततः पतनजन्यं कक्षाच्यवनं वारितं भवति। अत्र दृष्टान्तः— "अक्षेणेव चक्रिया"–इति। 'चक्रिया' चक्रियौ, चक्रगतौ निम्नोर्द्ध्वप्रान्तौ यथा 'अक्षेण' स्तब्धौ दृश्येते लोके, तद्वदिति॥

तत्तृतीयप्रमाणन्तु स्वसिद्धान्ताघात मेव न सहते, किम्पुनः सत्यसिद्धान्ताघातम्। तथाहि— यदिदं श्रूयते सप्तविधसोमयागेषु अग्निष्टोमादिषु प्रातरनुवाकविधावैतरेयके— "प्रातर्वै स तं देवेभ्यो ऽन्वब्रवीत्"–इत्यादि (२. २. ५.)। एतया श्रुत्या प्रातरनुवाकपाठस्य प्रातरेव कालो व्यक्तीकृतः। ततस्तदुत्तरत्र प्रातरनुवाकर्चां सङ्ख्याविधौ श्रूयते— "सहस्र मनूच्यं स्वर्गकामस्य"–इत्यादि पक्षान्तरत्वेन। स एषः सहस्रर्चां पाठपक्षः प्रातःकाले कथ मिहार्यावर्त्ते सङ्गच्छेत ? सुमेरुप्रदेशे तु सङ्गच्छते; तत्रोषसो मासद्वयव्यापित्वात्। तदित्थ मुषसि सहस्रर्चांनां पाठविधानं गमयत्येवाय्यार्याणां दीर्घौषसे सुमेरौ तदानी मासीद् वास इति।

अत्र ब्रूमः—नैषः प्रातरनुवाकविधिः क्वचिदृक्संहितायां श्रुतः, अपि श्रूयते ब्राह्मणे त्वैतरेयकादौ, तत् किं मिद मैतरेयादिक मपि तत्रैव प्रोक्तम् ? तथा स्वीकारे यदिदं श्रूयतेऽत्रैतरेये— "ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः"–इत्यादि (३८पृ० २४पं०), तत् कथं सङ्गच्छेत ? किञ्च यदि प्रातरनुवाकपाठस्य कालो द्विमासात्मको मन्येत, तर्हि प्रातस्सवनमाध्यन्दिनसवनतृतीयसवनानां कालाः कीदृशा मन्तव्याः ? संवत्सरसत्रकालश्च कीदृशः ? इत्यादि च तेन निरूपणीय मेव। अथापरम्, यदि

दीर्घोषसे सुमेरावेव प्रातरनुवाकपाठसम्भव इति मन्येत, तर्हि युधिष्ठिरादिभिर्वाजिरावान्तैरार्यावर्त्तवासिभिरनुष्ठितेष्वश्वमेधादिषु प्रातरनुवाकानां पाठो न बभूवेति किं मन्तव्यम् ?

अन्यच्च; यथा सहस्रवार्षिकसत्रस्यासम्भवता मालक्ष्य मीमांसायां मधिकरण मेक मारचितम्, तथैवेह्योषसि सहस्रसङ्ख्याकाना मृचां पाठोऽसम्भव इति किं नात्र विचारित मित्यपि विचार्य मेवेति।

वस्तुतस्तु "महति रात्र्या अनूच्यः पुरा शकुनिवादात्"–इत्येव विधिः। 'रात्र्याः' पूर्वस्योपवसथ्याख्यस्य दिनस्य अग्निष्टोमीयपश्वनुष्ठानयुक्तस्य या रात्रिः तस्या रात्रेः सम्बन्धिनि शेषे 'महति' अवतिष्ठमाने सति प्रातरनुवाकाख्याना मृचां पाठ आरब्धव्यः, 'शकुनिवादात्' शकुनयः पक्षिणः, ते यस्मिन्नुषःकाले प्रबुध्य वदन्ति ध्वनिं कुर्वन्ति, ततः 'पुरा' पूर्व मेव तत्पाठः समाप्य इत्यर्थः। अत्राह सायणः—"एतदुक्तं भवति, यस्मिन् काले प्रारब्धः प्रातरनुवाकः तमसोपघातात् पुरैव समापयितुं शक्यः स्यात्, तदा प्रारब्धव्यः"–इति (२. २. ५.)। अवश्यपाठ्यप्रातरनुवाकस्य सङ्ख्या त्वेकविंशतिरेव (ऐ० ब्रा० २. २. ६.); काम्यपाठ्यस्य तु शतादिका सहस्रान्ता। तदत्रावश्यपाठ्याना मृचां पाठस्तु प्रातरेव नूनं सम्पद्यत इति प्रातरनुवाकनामकरण मुपपद्यते। काम्यपाठ्यानां शतादीना मृचां पाठस्तत्रोषस्यसम्भव इत्येव श्रुतं तत्र तदुत्तरम्— "अपरिमित मनूच्यम्"–इति (२. २. ७.)। "शतं सहस्र मित्यादि सङ्ख्यापरिमाणं परित्यज्य मध्यरात्रादूर्ध्व मुपक्रम्य सूर्योदयात् प्राचीनकाले यावतीरनुवक्तुं शक्तिरस्ति तावतीरनुब्रूयात्"–इति च तत्र सायणभाष्यम्।

वस्तुतस्त्वस्ति च प्रातरनुवाकस्य सर्वदिवापाठ्यत्वश्रुतिः—

"उदित आदित्ये प्रातरनुवाकमनुब्रूयात्; सर्वं ह्येवैतदहर्दिवाकीर्त्यं भवति"—इति (ऐ० ब्रा० ४. ३. ४.)। काम्ये बहुसङ्ख्याकर्चां पाठपक्षे एतदेव स्याच्छरणम्; नित्यपाठ्यानां प्रातरनुवाकर्चां मत्यल्पसङ्ख्यात्वेन प्रातःपाठस्य अवश्यम्भावित्वात् प्रातरनुवाक इति नामधेयस्यान्वर्थतापि नानुपपन्नेति सर्वं मवदातम् ॥

उषोदीर्घत्वश्रवणपरं तदीयचतुर्थप्रमाण मप्यकिञ्चित्करम्। तथाहि— "स क्षपः परिषस्वजे"—इति (ऋ० सं० ८. ४१. ३.) मन्त्रे श्रूयते "तस्य वेनीरनु व्रत मुषस्तिस्रो अवर्द्धयन्नभन्ताम्"—इति। तदिह उषसस्त्रित्वश्रवणात् दीर्घत्वं गम्यते, तच्च सुमेरावेव सङ्गच्छत इति तदीयम्। तत्रतस्त्विह वरुणविज्ञानोपदेशके मन्त्रे नोषसस्त्रित्व मभिहितम्, प्रत्युत 'तस्य' वरुणस्य 'व्रतम्' कर्म 'अनु'-सृत्य 'उषः' कालः 'तिस्रः वेनीः' त्रिविधाः जरायुजाजरायुजोद्भिज्जाः 'वेनीः' प्रजाः 'अवर्द्धयत्' वर्द्धयति इत्येवोपदिष्टम्। अन्यत्रान्यत्र च "प्रजा ह तिस्रो अत्याय मीयुः"—इत्यादौ (ऋ० सं ८. १०१. १४.) प्रजानां त्रिविधत्वं श्रुत मेवेति द्रष्टव्यम्। 'अवर्द्धयत् + नभन्ताम्—इतिपदद्वयसन्धिजन्यम् अवर्द्धयन्नभन्ता मिति रूपम्; अपिवा व्यत्ययकृतं बहुवचनम्।

उषसो दीर्घत्वप्रमाणाय तेन यदिय मृगुदाहृता— "कियात्या यत् समया भवति"—इति (सं० १. ११३. १०.), सैषा उषोविज्ञानसूक्तान्तर्गता उषसोऽनन्तत्वं वेदयति, न तु प्रादेशिकदीर्घत्वम्।

तथोषसः पञ्चविभागत्वाख्यानेन दीर्घत्वं सूचयितुं तस्य यत् तैत्तिरीयानुवाकस्योद्धरणम् (सं० ७. २. २०.), तदपि निरर्थकम्; तादृशविभागस्यात्रार्यावर्त्तेऽप्यस्त्युपयोग इति।

किञ्चेहेद मपि विवेच्यम्,— सुमेरुप्रदेशीयोषसो दीर्घत्वं

कि मायावर्त्तवासिना मस्माकं दृष्ट्या प्रतिपाद्यते, उत तत्रत्याना मिति। इहत्याना मिति चेत्, तेन कथं सिध्येत् तत्राद्यार्याणां वास: ? अथ तत्रत्यानां तादृशमन्त्रकर्त्तृत्वं प्रमेय मिति चेत्, तदपि नोपपद्यते; दीर्घत्वं ह्यापेक्षिकं भवतीति न तत् उषसोऽन्तरदर्शन-विरहादपि सङ्गच्छते! तत् कि मेतेन उषोदीर्घत्वप्रकाशकमन्त्रा-न्वेषणेनेति धीषणावता तेनैव स्वयं विवेच्य मिति॥

यदिदं श्रूयते—"तानीदहानि बहुलान्यासन् या प्राचीन मुदिता सूर्यस्य"–इति (ऋ० मं० ७. ७६. ३.), तदित: खलू-षस: कतिदिनव्यापित्वं गम्यते स्फुट मिति तेषा माद्यार्याणां सुमेरुवासित्वे पञ्चमं प्रमाण मित्याह। अस्माकं तु नात्र श्रुतौ तिल-कोद्भावित मर्थतिलकं प्रतीयते, प्रतीयते तु अङ्गा मानन्त्यम्; तदिहाशेषशेमुषीमन्तो भूमिदेवा एव प्रमाणम्॥

उष:शब्दस्यानेकत्र बहुवचनान्तप्रयोगोऽप्यत्रास्यैकं प्रमाणम्, तदिदं षष्ठं स्यात्। तद्यथा तैत्तिरीयब्राह्मणे मन्त्र:—

"इमा एव ता उषसो या: प्रथमा व्यौच्छन्।
ता देव्य: कुर्वते पञ्चरूपा। शश्वतीर्नावपृज्यन्ति।
न गमन्त्यन्तम्"–इति (२. ५. ६. १२.)।

तत्वतस्तत्प्रदर्शितो ह्येष मन्त्र: पुनर्जन्मविषयो न तूषसो दैर्घ्य मावेदयति; तत् पश्यत्वेनत्पूर्वमन्त्रावेतौ—

"पूर्वं देवा अपरेणानुपश्यञ्जन्मभि:। जन्मान्यवरै: पराणि।
वेदानि देवा अय मस्मीति माम्।
अह७ हित्वा शरीरं जरस: परस्तात्"–इत्येक:,

अथापर:—"प्राणापानौ चक्षु: श्रोत्रम्। वाचं मनसि सम्भृताम्। हित्वा शरीरं जरस: परस्तात्। आ भूतिं भूतिं वय मश्नवावहै"

—इत्यतस्तृतीय एवैष यः पूर्वं प्रदर्शितः। तथा च पूर्वजन्मनि दृष्टा एवेमा उषस इत्येव तत्फलितार्थः सम्पद्यते। एवञ्च न कथ मप्येष मन्त्रः सुमेरुप्रदेशीयोषसो बहुदिनव्यापित्वे प्रमाणं भवितु मर्हतीति स्फुटम्। किञ्च तत्रत्योषसो बहुदिनव्यापित्वं तत्रत्यानां कथं भवेदधिगन्तव्य मित्यपि विचार्य मेव ॥

यदप्युक्तं सूर्यस्य उषसश्च सुमेरुतो दक्षिणोदयदर्शनादेव "पुत्र-श्चरति दक्षिणायाः (ऋ० सं० ३. ५८. १.)"—इति दक्षिणापुत्रत्व-व्यपदेशोऽपीति। तच्चैतत् सप्तमं प्रमाण मपि मज्जमानस्य वह-मानतृणावलम्बन मिवाकिञ्चित्करम्। उत्तरः=ऊर्द्धस्थः सूर्यः, दक्षिणा=अधःस्था पृथिवी, इत्येव सर्वत्र ज्ञेयम्। सुमेरु-वासिनां तु येयं दिगस्माकं पश्चिमा, सैव स्याद् दक्षिणा; यस्यां दिशि सूर्योदयस्तस्या एव प्राक्त्वनियमात्। पुरः, पुरस्तात्, प्राक्, पूर्वेत्यभिन्नार्थाः; सूर्योदयास्तनिबन्धन एवात्र भवत्यस्माकं दिग्-व्यवहारः प्राक्प्रत्यगुदगर्वागितीति। श्रुतिसिद्धं (ऐ० ब्रा० १. २. ३.) युक्तिगम्यञ्चैतत् किं तेन स्वमतप्रतिपादनव्यग्रतया विस्मृत मिति विचारयन्तु धीमन्त एव ॥

अहो चित्र मिदम्! "सप्तर्षिहस्तावचितावशेषानधोविवस्वान्" —इति कुमारसम्भवश्लोकोऽपि तेन स्वमतप्रमाणत्वेनोपन्यस्तः, तत् किं मध्ययुगीयस्य "अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः"—इतिवादिनः कालिदासस्यापि सुमेरुस्थत्वं मन्तव्यम्? तदिदं तदीय मष्टमं प्रमाण मस्मानतीव विस्मापयतीत्यत्र मौनावलम्बन मेव श्रेयः ॥

"दीर्घतमा मामतेयः"—इत्येतद्व्युक्तौ 'दीर्घतमाः'—इति सञ्ज्ञा-पद मपि स्वमतप्रमाण ममानि तेन। तदिदं तदीयं नवमं

अत्र च यास्कोक्तौ "प्र मातुः प्रतरं गुह्यम्"—इति ( ऋ० सं० १०. ७९. ३. ) विद्युद्विज्ञानमन्त्रः प्रमाणम्। वायुरूपत्वाद्दृश्यम्। तत्राह "त्रयः केशिनः"—इति ( ऋ० सं० १. १६४. ४४. ) ज्योतिर्विज्ञान-मन्त्रव्याख्यायां यास्कः—"अग्निः पृथिवीं दहति सर्व मेकः, अभि-विपश्यति कर्मभिरादित्यः, गतिरेकस्य दृश्यते न रूपं मध्यमस्य" —इति ( निरु० १२. ३. ८. )। वैश्वानरव्याख्याया मेव मग्निविद्यु-दादित्यानां क्रमाद् पृथिव्यन्तरिक्षद्युस्थानत्व मप्येकात्मकत्व मुपपा-दितं द्रष्टव्यम् ( निरु० ७. ६. ७. )।

तदित्थ मसावेव प्रत्यक्षः सूर्यः, त्रिलोकव्यापी ज्योतिःस्वरूपो विष्णुः, न चास्य माध्यमिकस्य रूपस्य दर्शन मस्तीति शाकपूणि-मते सम्पन्नं विष्णुविज्ञानम्।

और्णवाभमते शब्दभेदेऽप्यर्थाभेद एव। तद्यथा यदुक्तं शाक-पूणिना दिवीति, तदेवोक्त मौर्णवाभेन समारोहण इति। तदत्र "एषांल्लोकानां रोहेण सवनानां रोह आम्नातो रोहात् प्रत्य-वरोहश्चिकीर्षितः"—इति ( ७. ६. ४. ) नैरुक्तं द्रष्टव्यम्। एवं विष्णुपदशब्दो "वियद् विष्णुपद मित्यमरकोषादितोऽन्तरिक्षवाची प्रसिद्ध एवेति किं तत्र प्रमाणान्वेषणप्रयासेनेति। अवशिष्टं गयशिरसीति पदम्। तत्राद्ययोः पदार्थयोरुभयोरप्याचार्ययोरैक-मत्ये सम्पन्ने अन्तिमपदार्थे कथं स्यान्मतद्वैध मित्यविचारित मपि स्वीकार्यम्— पृथिव्यामिति गयशिरसीति चाभिन्नार्थे पदे। पठ्यते हि निघण्टौ गृहनामसु 'गयः'—इति पदम् ( ३. ४. १. )। एवञ्च समारोहणं सोपानम्, तच्चात्र सूर्यस्योदयस्थान मस्तमय-स्थानञ्चेत्येतद्भूगोलपार्श्वद्वयम्; विष्णुपद मन्तरिक्षम्, तच्चेहाधःस्थं ग्राह्यम्; गयशिरसि गृहाणां मूर्द्धप्रदेशे। तथा च सूर्यो मध्याह्ने

गयशिरस मागच्छन्, क्रमात् सायं समारोहण मधिरोहन्, रात्रौ विष्णुपदे तिष्ठन्, पुनरुदयात् प्राक् समारोहण मारोहतीति प्रतीयते स्फुट मौर्णवाभाशयः । तदत्र मन्त्रे सूर्यस्यैव गुणा वर्णिता इतीदं विष्णुविज्ञानं नाम सूर्यविज्ञान मेव ।

तैत्तिरीयसंहिताया मप्येष मन्त्र एव मेव सूर्यवाचिविष्णुविज्ञानपरत्वेन व्याख्यातः । तद्यथा— "स विष्णुस्त्रेधाऽऽत्मानं विन्यधत्त,— पृथिव्यां तृतीयम्, अन्तरिक्षे तृतयम्, दिवि तृतीयम्" —इत्यादि ( २. ४. १२. ६. ) । वा०-रामायणेऽपि १. ३१. १९ —

"एकेन हि पदा कृत्स्नां पृथिवीं सो ( विष्णुः ) ऽध्यतिष्ठत ।
द्वितीयेनाव्ययं व्योम, द्यां तृतीयेन, राघव !"—इति ।

अहो पौराणिककालमाहात्म्यम् ! अहो यज्ञपरव्याख्यामात्राध्ययनाध्यापनमाहात्म्यम् ! अहो वालानां कल्पिताख्यानप्रियतानुगत्यम् ! यदत्र सर्वब्राह्मण-निरुक्तादिक मालोचयतापि सर्ववेदभाष्यकारेण सायणाचार्येण व्याख्यातोऽयं मन्त्रः— "विष्णुस्त्रिविक्रमावतारधारी"—इत्यादिनेति । अथवा श्रूयत एवैतत्—

"ऋचो अक्षरे परमे व्योमन्
यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किं ऋचा करिष्यति
य इत् तद् विदुस्त इमे समासते"
—इति ऋ० सं० १. १६४. ३९ ।

किञ्च ये वै सर्वशक्तिमतोऽपीश्वरस्य "परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" —इति ( भ० गी० ४. ८. ) युगे-युगेऽवतरणं भवत्येवेत्यवतारकथायां विश्वसन्ति, विश्वसेयुश्च वाईवेल्कथितातिभ्रान्तेश्वरविश्रामवास-

कथाया मपि, तादृशानां हि देवप्रियाणा मेतादृशेऽर्थे क्वास्ति चित्ततीत्यलं प्रासङ्गिकानल्पभाषणेनेति ॥

तदेवंविधाना मधिदैवतार्थयुक्तानां मन्त्राणा माध्यात्मिकार्थानाञ्च बहूनां प्रायशो याज्यानुवाक्याशस्त्रस्तोत्रादौ व्यवहारो भवति, केवलाधियज्ञार्थयुक्तानान्तु प्रायशः प्रैषादिकर्म्मव्यापारेष्विति विशेषः। येषान्तु मन्त्राणां ज्योतिष्टोमाद्यामुष्मिकादृष्टफलेषु न क्वथमप्युपयोगः, तादृशानां केषाञ्चित् ऐहिकदृष्टफलकारीर्यादियागादौ विनियोगा भवन्ति। इतोऽन्येऽपि सन्ति ये मन्त्राः, ते ब्रह्मयज्ञपाठादौ विनियुज्यन्ते। एषा मेव केचिन्मन्त्रा औपनिषदा अपि भवन्तीति विवेकः ॥

अप्येषां मन्त्राणां यथा गद्यपद्यगीतिरचनाप्रकारभेदादस्ति ऋग्यजुस्सामेति त्रिधात्वम्, तथैवास्ति च मन्त्राधिगतक्रियापदनिबन्धनापि त्रिधात्वम्। तदाह यास्कः— "तास्त्रिविधा ऋचः,— परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिक्यश्च"–इत्यादि (निरु० ७. १. १.)। तथाच यास्वृक्षु प्रथमपुरुषक्रियाः श्रूयन्ते, ताः परोक्षकृताः; यासु मध्यमपुरुषक्रियाः, ताः प्रत्यक्षकृताः; यासूत्तमपुरुषक्रियाः, ता आध्यात्मिक्यः। इह श्रुत ऋक्पदं मन्त्रपरम्; यजुरादिष्वपि तथा दर्शनात्।

ऋग्यजुस्सामलक्षणैस्त्रिविधैरेव मन्त्रैर्यज्ञः सम्पाद्यो भवति। तदुक्त मापस्तम्बेन— "स (यज्ञः) त्रिभिर्वेदैर्विधीयते, ऋग्वेदयजुर्वेदसामवेदैः"–इति (प० ३, ४सू०)। तत्र "ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ, यजुर्वेदेनाग्निहोत्रम्, सर्वैरग्निष्टोमः"–इति च (प० ५, ६, ७.) तत्सिद्धान्तः। अप्यग्निष्टोमादौ "ऋग्वेदेन होता करोति, सामवेदेनोद्गाता, यजुर्वेदेनाध्वर्युः सर्वैः

ब्रह्मा"–इति चोक्तं तत्र तेनैव ( १९, २०, २१, २२. )। तदेवात्रा-
सकृदाम्नातम्— "ऋचैव हौत्र मकुर्वन्, यजुषाध्वर्यवम् साम्नो-
द्गीथम् (औद्गात्रम्), यदेवैतत् त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्व मकु-
र्वन्"–इति (५. ५. ७, ८.)। होत्रादयश्चैते चत्वारश्चत्वारो व्रियन्ते।
तदाहाश्वलायनः— "तस्यर्त्विजः, चत्वारस्त्रिपुरुषाः, तस्य तस्यो-
त्तरे त्रयः। होता मैत्रावरुणो ऽच्छावाको ग्रावस्तुद्, अध्वर्युः प्रति-
प्रस्थाता नेष्टोन्नेता, ब्रह्मा ब्राह्मणाच्छंस्याग्नीध्रः पोता, उद्गाता
प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्य इति"–इति (श्रौ० सू० ४. १. ३–८.)।

ततोऽत्र ऋग्वेदीयब्राह्मणे प्रधानतो होताच्छावाकमैत्रावरुण-
ग्रावस्तुदित्येषां चतुर्णां होतॄणां कर्माणि शंसनादीन्यभिहितानि;
प्रसङ्गाद् ब्रह्मत्वादीन्यपि। इतोऽवशिष्टान्येतदारण्यकतोऽवगम्यानि।
ततोऽप्यवशिष्टानि त्वाश्वलायनसूत्रादितोऽवगन्तव्यानि भवन्ति।
नापि सर्वेषा मेवेष्टिहौत्रसोमाना मैकाहिकाहीनसत्राणां विधय
इहैवैकत्र ब्राह्मणे समाम्नाताः; अपि केषाञ्चिदेवेति॥ अथ यज्ञाङ्ग-
क्रमादिबोधाय क्रतुसङ्ग्रहोक्ता अग्निष्टोमकारिकास्त्वेहोद्ध्रियन्ते—

"अथाग्निष्टोमसंस्थेन ज्योतिष्टोमेन यो यजेत्।
स पूर्वं मृत्विजो वृत्वा देवभूमिं विनिश्चयेत्।
दीक्षणीयां निर्वपेत् सोऽपि पत्नीसंयाजसंस्थितिम्।
कृते प्राचीनवंशेऽथ संस्कारा वपनादयः।
हुत्वा दीक्षाहुतीः, कार्या दीक्षा कृष्णाजिनादिभिः।
दीक्षितो नियमैर्युक्तो भवेत् क्षीरव्रतादिभिः।
द्वादशाहं दीक्षितोऽथ भिक्षित्वा द्रव्य मानयेत्।
सोमं चर्मण्यवस्थाप्य विवसेत् सोमविक्रयी।
संवृत्ता प्रायणीया स्याद्, गृह्णीयात् क्रयणीपदम्।

क्रीत्वा सोमं रथे क्षिप्वा प्राग्वंशाग्रे समानयेत् ।
आतिथ्यां निर्वपेत् सोम मासन्द्या मुपसादयेत् ।
आतिथ्येष्टिरिडान्ता स्यात्, तानूनप्त्रं भवद्यति ।
दीक्षा भवान्तरा भेति, प्रवर्ग्योपसदोः कृतिः ।
दिनत्रये तत् कृतं स्यात्, वेदिर्मध्यदिने भवेत् ।
षट्त्रिंशत्पददीर्घेषा प्राग्वंशात् पूर्वतः स्थिता ॥

प्रातः प्रवर्ग्य मुद्वास्य, पश्चादुत्तरवेदितः ।
शकटे द्वे हविर्द्धाने, हविर्द्धानं च मण्डपम् ।
पश्चात्सदस्तस्य मध्ये निखातौडुम्बरी मिता ।
दक्षिणस्यानसोऽधस्ताद् गर्त्तानुपरवान् खनेत् ।
विधाय फलकाभ्यां तानग्रे कुर्यान्मृदा खरम् ।
निर्वपेद्धिष्ण्यगानग्नीषोमीयं पशु माचरेत् ।
प्रयुज्याचितपात्राणि दर्शवत् सर्व माचरेत् ।
आज्य आसादिते वेद्या मन्ते यूपं समुच्छ्रयेत् ।
यूपस्योच्छ्रयणादूर्द्ध्वं समापय्य पशुं ततः ।
वैसर्जनानि हुत्वाग्निं सोमं ग्रावादि चानयेत् ।
हविर्द्धाने स्थापयित्वा गृह्णीयाद्वसतीवरीः ।
प्रयुञ्ज्यात् सोमपात्राणि महारात्रे खरादिषु ।
ग्रावसु स्थापिते सोमे पक्षिणां ध्वनितः पुरा ।
स्यात् प्रातरनुवाकार्थ मुपाकरण मादरात् ॥

वसतीवर्यपां प्राप्तौ प्रचारः स्याद् दधिग्रहे ।
उपांश्वदाभ्यौ हुत्वा च महाभिषव माचरेत् ।
उपांशु मन्तर्यामं च हुत्वा रिक्तं तु सादयेत् ॥

अथैन्द्रवायवं पात्रैर्गृहीत्वा सादयेत् खरे ।
यो मैत्रावरुणस्तं तु श्रीणाति पयसा ग्रहम् ।
शुक्रः श्रृतो हिरण्येन, श्रृतो मन्थी तु सक्तुभिः ।
गृहीत्वाग्रयणं गृह्णात्यतिग्राह्याभिधान् ग्रहान् ।
गृहीत्वौक्थ्यं ध्रुवो ग्राह्यः पवमानग्रहास्त्रयः ।
पूतभृद् द्रोणकलशो ऽपरश्चाधवनीयकः ।
ते बहिष्पवमानाय प्रचरन्त्यत्र पञ्च ते ।
गृहीत्वाश्विन माग्नेयं पशोः कुर्यादुपाकृतिम् ।
सवनीयपुरोडाशैश्चरित्वा ह्यैन्द्रवायवम् ।
हुत्वा ग्रहं, द्वयोर्मैत्रावरुणाश्विनयोर्हुती ।
शुक्रमन्थ्यादिकान् हुत्वा चमसानपि जुह्वति ।
संरभ्यर्त्तुग्रहैन्द्राग्नसोमप्रतिगरांस्ततः ।
आज्यस्तोत्रेभ्य ऊर्द्ध्वं हि प्रातस्सवनसंस्थितिः ॥
माध्यन्दिने तु सवने पुरोडाशः पशोर्भवेत् ।
ग्रहो मरुत्वतीयः स्यात् पवमानेन संस्तुतिः ।
दधिघर्मे हुते दद्यात् दक्षिणास्ते यथायथम् ।
मरुत्वतीयांस्तान् हुत्वा माहेन्द्रेण समाप्यते ॥
तृतीयसवनारम्भ आदित्यग्रह माचरेत् ।
आर्भवेण स्तुवीताथ पश्वङ्गैः प्रचरत्ययम् ।
सावित्रवैश्वदेवाख्यौ ग्रहौ, सौम्यचरुस्तथा ।
पात्नीवतग्रहादूर्द्ध्वं यज्ञायज्ञीयसंस्तवः ।
आग्निमारुतशस्त्रं स्याद् गृह्णीयाद्धारियोजनम् ।
समाप्ते सवने पश्चात् कुर्यादवभृथं ततः ।
कुर्यादुदयनेष्टि मनुबन्ध्यां यजेत गाम् ।

देविका निर्वपेद् देवसुवासापि यजूंष्यथ ।

उपोष्य वेदि माग्नेय मिष्टाग्निष्टोमसंस्थितिः ॥"—इति ।

एव मेव देवस्वाम्यादिकृताग्निष्टोमपद्धत्यादौ सायणाचार्य्यकृत-यज्ञतन्त्रसुधानिध्यादौ च पर्य्यालोच्यम्; अच्छावाकीयप्रयोगादिषु च बह्वालोच्य मस्ति ; मत्सम्पादिते मट्टीकिते चैतरेयब्राह्मणपरिशिष्टे वालखिल्यप्रयोगस्य दर्शनेन होतृप्रयोगरीतिश्च विज्ञातव्या ; बौधायनसूत्रादिभ्यश्चाध्वर्यवादिप्रयोगज्ञानं च सुसम्पाद्य मिति ॥

एतर्हि ऋग्वेदस्य द्वे एव ब्राह्मणे लभ्येते,— इद मैतरेयक मेक मपरस्तु कौषीतकं नामेति । तत्र कौषीतके प्रथम मेव दर्शपूर्णमासेष्टिरारब्धा ; ततोऽग्निहोत्रादिकं प्रकीर्णकञ्च किञ्चिद् विधायैव क्रमेण वैमृधेष्टिः , स्वस्त्ययनेष्टिः , पथिकृदिष्टिः , दाक्षायणेष्टिः , इळादधेष्टिः , सार्वसेनीष्टिः , शौनकेष्टिः , वसिष्ठेष्टिः, शाकेष्टिः, मुन्ययनेष्टिः , तुरायणेष्टिः , आग्रयणेष्टिः , वसन्तेष्टिः , व्रीहियवेष्टिः , चातुर्मास्येष्टयश्चतस्रः , पित्र्यष्टिश्चेति दर्शपूर्णमासाभ्यां सङ्कलनया एकविंशतिर्यागा आम्नाताः । ततः पुनरपि किञ्चिदानुषङ्गिकं प्रोच्य दीक्षणीयेष्टिं विधायाग्निष्टोमकाण्डस्य प्रवचनारम्भः कृतः । ततः "सोमेनेष्ट्वा सौत्रामण्या यजेत"—इत्यादि विधाय षोडश्यादिज्योतिष्टोमसंस्थादीना मपि विधान माम्नातम् । तदस्मिन् ब्राह्मणे ऐतरेयानाम्नातांना मप्यनेकयागानां शस्त्रयाज्याविध्यादिकं दृश्यते, दृश्यते चैतरेयोक्ताना मप्यनेकप्रयोगानां समासत उल्लेखः । तदेतयोरङ्गाङ्गिभाव एवोपगन्तुं युज्यते ॥

अथात्रैतरेयके प्राचीनब्राह्मणकारर्षीणां क्वचित्-क्वचिन्नामोद्धृतिः, क्वचित्-क्वचिद्वचनोद्धृतिः, क्वचित्-क्वचित् सनामवचनोद्धृतिश्च दृश्यते । तद्यथा— "पूर्वां पौर्णमासीं मुपवसेदिति पैङ्ग्यम् ,

उत्तरा मिति कौषीतकम्"–इति ७, २, १०। श्रूयते चैतत् कौषीतक्यास्तृतीयेऽध्याये। तत्र हि स्वपूर्वतनस्य पैङ्गस्य मतविमर्द्दनाय तथा स्वनामाञ्चितं कृतं तद्विधानं कुषीतकेन, तदेव मतद्वयं यथायथ मिहोद्धृत मित्येव प्रतिभात्यस्माकम्। एवञ्च प्रथमन्तावत् पैङ्ग्यादिब्राह्मणग्रन्थेष्वेव ज्योतिष्टोमसंस्थाग्निष्टोमादयो यागा विहिताः, तद्विधिशेषास्ततः कुषीतकादिभिः प्रोक्ताः, तच्छेषविधयोऽप्येतस्यैतरेयस्य विषया इति सिद्धम्॥

———

(८)

अथ क्रमप्राप्त मिदानी मिद मपि विचार्य्य मस्ति, किमु प्रयोजन मेतस्येति। सम्प्रति लोके मोक्षस्यैकस्य परमपुरुषार्थत्वेन स्वीकारात्, तदवाप्तिरेवास्य फलं मन्येत, यदि नाम वेदे तस्य स्वीकृतिः श्रूयेत? न हि संहितासु क्वापि तादृशशब्दोऽपि श्रूयते; अपुनरावृत्तिमतन्तु ब्राह्मणेषु गम्यते सत्यम्, परं न तत् पौराणिकमोक्षपर मिति च नासत्यम्। अस्ति पुराणेषु क्वचित् चतुर्विधस्य क्वचित् पञ्चविधस्य च मोक्षस्योल्लेखः। तद्यथा भागवते—

"सार्ष्टिसारूप्यसालोक्यसामीप्यैकत्व मप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः"–इति।

अस्मिन् श्लोके सार्ष्टीति बौद्धशास्त्रप्रसिद्धं निर्वाणम्। तत्तु नित्यस्यात्मनो नैव सम्भाव्य मस्ति, न च सुखाभिलाषिणा मस्माकं प्रार्थनायोग्यम्, नापि वेदबोधित मित्यश्रद्धेयम्। एकत्व मपि तथैव। सर्वव्यापिनोऽस्य परमेश्वरस्य सर्वलोके सर्वसमीपे च

सर्वदा विद्यमानत्वात् सालोक्य-सामीप्ये त्वप्रार्थिते अपि स्त एव सर्वत्र सर्वेषा मस्माक मिति किं तयोः प्रार्थनया। सारूप्यवादस्तून्मत्तप्रलापः; ब्रह्मणो रूपाभावात्, असङ्ख्यत्वप्रसङ्गाच्चेति। एवं निरुक्तपरिशिष्टशेषे च यदुक्तं "सारिष्टम्"-इत्यादि, तन्नूनं महाभाष्यतोऽप्यर्वाचीन मिति सिद्धान्तित मेव निरुक्तालोचनस्य षष्ठे। तत्वतस्त्वेतस्य ब्राह्मणस्य स्वर्गसाधनयागविध्युपदेशा एवाभिधेया इत्यतः स्वर्ग एव प्रयोजन मिति ब्रूमः; अस्माकं स्वर्गफलसाधनायैवैतद् ब्राह्मणं प्रवृत्त मिति यावत्। तदाह जैमिनिः— "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्, प्रत्ययाच्च"-इति ४.३.१५, १६।

सोऽसौ स्वर्गः खलु लोकान्तरः। तथाहि— "परो वा अस्माल्लोकात् स्वर्गो लोकः"-इति (६. ४. ४.), आदित्याश्चैवेहासन्नङ्गिरसश्च तेऽग्नेऽग्निनाग्नि मयजन्त, ते स्वर्गं लोक मायन्"-इति (१. ३. ५.), "तं स्वर्यन्तोऽब्रुवन् एतत् ते ब्राह्मण! सहस्र मिति"-इति (५. २. ८.) च। स हि लोकान्तरोऽस्माल्लोकादूर्द्धतनः। तथाचाम्नातम्— "अग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्मयशरीर ऊर्द्ध्वः स्वर्गलोक मेष्यति"-इति (२. १. ३, पुनः २. २. ४.)। तत्र पापी गन्तुं न शक्यते। तच्चाह— "सोऽपहतपाप्मोर्द्ध्वः स्वर्गं लोक मेति"-इति (७. २. ११.)। अत एवेद मप्याम्नातम् (४. ३. ६.)— "स्वर्गो वै लोको दूरोहणम्"-इति।

परलोकस्वीकाराभावे निन्दाश्रवणञ्च गम्यते। तद्यथा— "किं ते कृण्वन्ति कीकटेषु गावः"-इति (ऋ० सं० ३. ५३. १४.) मन्त्रस्य व्याख्याने 'प्रमगन्द'-पदस्य "प्रमदको वा योऽय मेवास्ति न पर इति प्रेप्सुः"-इत्याह यास्कः (६. ६. ४.)।

अथात्र विशेषतो विवेच्य मिदम्—भूर्भुवस्स्वरिति य इमे त्रयो लोकाः सर्ववेदप्रसिद्धाः, तेभ्यः सर्वेभ्य एवैभ्यः परोऽतिरिक्तः कश्चिदस्ति स्वर्गो लोकः, आहोस्वित् एषा मन्यतम एकः, उत सर्व एवेमे स्वर्गा इति ?

तत्रादौ भूरादय एवैते यथाबोधं निरूप्यन्ते। श्रूयते हि शतपथे—"भूरिति वै प्रजापति रिमा मजनयत, भुवरित्यन्तरिक्षम्, स्वरिति दिवम्; एतावद्वा इदं सर्वं यावदिमे लोकाः सर्वेणैवाधीयते"—इति (२. १. ४. ११.)। एवमादिश्रुतिभ्योऽवगम्यते इयं पृथिव्येव भूर्लोकः, असौ द्युलोक एव स्वर्लोकः, एतयोर्लोकयोरन्तरा चान्तं यदाकाशम्, तदन्तरिक्ष मिति। तत्रास्मिन् पृथिवीलोके पार्थिवस्याग्नेः प्राधान्यम्, अमुष्मिन् द्युलोके सूर्यस्य; अन्तर्लोके त्वस्य वायोरिति। अत एव प्रदर्शितं पुरस्तात् "तिस्र एव देवताः"—इत्यादि (१५०पृ०)। द्यावापृथिवीत्युक्ते द्युलोक मारभ्यैतल्लोकान्तं सर्व मेवेदं सौरं जगद् गृह्यते। अत एवाम्नात मैतरेये— "अग्निर्वै देवाना मवमो विष्णुः (सूर्यः) परमस्तदन्तरेण सर्वा अन्या देवताः"—इत्यादि (१. १. १.)। आभ्यां द्यावापृथिवीभ्यां बहिरपि अनन्ताकाश मस्ति, तत्रैतत्सौरजगन्मण्डलमण्डनरूपाकाशे सौरजगदन्तरागामी प्रवहो नामैष वायुर्न प्रवहति। एव माभ्यां द्यावापृथिवीभ्यां बहिरस्ति च द्युलोकस्य विद्यमानता; तत्रैतत्सौरजगन्मण्डलमण्डनस्यास्य सूर्यस्याधिकारो न ह्येव विद्यते; प्रवहवायुहीनाकाशं तीर्त्वा सौररश्मिजालस्यैतस्य तत्र गमनानुपपत्तेः। सन्ति हि तत्रैवं बहूनि सौरजगन्मण्डलानि, ध्रुवान्यविधान्यपि बहूनि। तान्येव ध्रुवारुन्धतीसप्तर्षिमण्डलादीनि ज्योतींषि नक्षत्राण्युच्यन्ते। ज्योतीरूपाणा मप्येषा

मादित्यतोऽप्यतिदूरस्थत्वेनैवाहनि सूर्यरश्म्यभिभूतत्वात् न दर्शन मस्ति। तदुक्तं निरुक्ते— "आदत्ते भासं ज्योतिषाम्"—इति (२. ४. १.)। एवञ्चान्तरिक्षशब्दस्याकाशपर्यायत्वे स्वीकृतेऽपि 'भुव-रित्यन्तरिक्षम् (शत० ब्रा० २. १. ४. ११.)"—इत्येवमादौ, "वायुर्वेन्द्रो वान्तरिक्षस्थानः (निरु० ७. २. १.)"—इत्यादौ च एतज्जगत्सम्बन्ध्येवान्तरिक्षं बोध्यम्। एवं "स्वरिति दिवः (शत० ब्रा० २. १. ४. ११.)"—इत्येव मादौ, "सूर्यो द्युस्थानः"—इत्यादौ (निरु० ७. २. १.) च एतज्जगत्सम्बन्ध्येव द्यौर्बोध्येति। तदेतेन लोकत्रयस्वरूपनिर्णयेनैव निर्णीतं स्वरिति।

स्वरिति पदं स्वर्गाभिधानं प्रसिद्धम्; सूर्यपर्यायश्च स एव स्वःशब्दः। अत एव निघण्टौ स्वरिति पदं सूर्यद्युलोकयोः साधारणनामसु पठितम् (निघ० १. ४. १.), निरुक्तावपि तथैव व्याख्यातम्— "स्वरादित्यो भवति; सु अरणः, सु ईरणः, स्वृतो भासं ज्योतिषां, स्वृतो भासेति वा"—इति (२. ४. २.)। अत्रापरञ्च श्रूयते— "स्वर्गो वै लोको ब्रध्नस्य विष्टपं, स्वर्ग मेव तल्लोकं यजमानं गमयति"—इति (४. १. ४.)। तद् ब्रध्नस्य विष्टप मपि सूर्यलोक एव। तथा ह्यृङ्मन्त्र एषः ८. ६९. ७—

"उद्यद् ब्रध्नस्य विष्टपं गृह मिन्द्रश्च गन्वहि।
मध्वः पीत्वा सचेवहि त्रिः सप्त सख्युः पदे"—इति।

द्युलोक एव देवलोकः; देवानां रश्मीनां प्रधानतस्तत्र निके-तनात्। अत एव निघण्टौ द्युस्थानदेवतासु 'देवाः'—इति पदं पठि-तम्— (५. ६. २६.), व्याख्यात मपि तथा तन्निगमप्रदर्शनादिभि-र्यास्केन। तदेवं द्युलोको देवलोको स्वर्लोक इमान्यभिन्नार्थानि पदानि। तदिद मप्याम्नात मुभयविधेऽपि यजुःसमाम्नाये—

"पृथिव्या अह मुदन्तरिक्ष मारुह मन्तरिक्षाद् दिव मारुहम् ।
दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगा मह्म् ॥
स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी ।
यज्ञं ये विश्वतो धारं सुविद्वांसो वितेनिरे"

—इति वा० सं० १७. ६७, ६८; तै० सं० ४. ६. ५. २, ४ । विनियुक्तावेतौ मन्त्रौ शतपथब्राह्मणकारेण (९. २. ३. २६, २७.), व्याख्यातौ च तैत्तिरीयसांहितिकब्राह्मणेऽपि ( ५. ४. ७. ) ।

सोऽसौ द्युलोक एव प्रकृतः परलोकः। अतएवैव माम्नातं शतपथे—"तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदञ्च परलोकस्थानञ्च, सन्ध्यं तृतीयं स्वप्नस्थानम्, तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च"—इति १४. ७. १. ९ ।

परमलोकोऽप्यसावेव। तथाहि—"स परमं लोक मजयदुपाश्विनोः प्रियं धाम गच्छति"—इति ( ऐ० ब्रा० १. ४. ४. ) । अश्विनोः प्रियं धाम नूनं द्युलोक एव; तयोर्द्युस्थेषु परिगणनात् ( निघ० ५. ६. १. ), "अथातो द्युस्थाना देवतास्तासा मश्विनौ प्रथमागामिनौ भवतः"—इत्यादिनैरुक्ताच्च ( १२. १. १. ) ।

अमृतलोकोऽप्यसावेव। तथा ह्याथर्वणिकाः समामनन्ति—
"सूर्यस्य भागे अमृतस्य लोके"— इति ८. १. १ ।

ब्रह्मलोकोऽप्यसावेव। अत एवोक्तं निरुक्तपरिशिष्टे जीवाना मूर्द्ध्वगतिव्याख्याने— "देवलोकात् आदित्यम्, आदित्याद् वैद्युतम्, वैद्युतान्मानसम्, मानसः पुरुषो भूत्वा ब्रह्मलोक मभिसम्भवति"— इति ( निरु० १४. ९. ) । शतपथेऽपि श्रूयत एतत् प्राय एव मेव ( १४. ९. १. १८. ) । अत्र वैद्युतशब्दो ज्योतिःपरः। तथा च देवलोकं द्युस्थानं सूर्यमण्डलं वा अभिगम्य आदि-

त्यम् आप्नुवन्ति, त मभिगम्य च तदीयज्योतिरुपलभ्य मनोमात्र-सहाया: पुरुषास्त मेव ब्रह्मलोक मनुभवन्तीति तदर्थ:। अत एव सुव्यक्त माम्नात मिहापि— "ओं मिति स्वर्गो लोक मित्यसौ योऽसौ तपति ( ५. ५. ७. )"–इति।

तदित्थ मिदं निष्पन्नम्— स्वर्गो लोक: खलु नैभ्यो लोक-त्रयेभ्योऽतिरिक्त:, अपि त्वस्माद् भूलोकात् पर इत्येव। अत एव श्रूयते— "त्रयो वाव लोका:,— मनुष्यलोक:, पितृलोको देवलोक इति"–इत्यादि शत० ब्रा० १४. ४. ३. ११। अत्र त्रयो वाव लोका इति श्रूयते ह्येवावधारणम्। एव मन्यत्रात्र— "पृथिवीलोक मेव पुरोऽनुवाक्यया जयति, अन्तरिक्षलोकं याज्यया, द्यौर्लोकं शस्यया"– इति श० ब्रा० ६. १. ६। अन्यत्र च — "दक्षिणत उपसृजति, पितृलोक मेव तेन जयति; प्राची मावर्त्तयति, देवलोक मेव तेन जयति; उदीची मादृत्य दोग्धि मनुष्यलोक मेव तेन जयति"–इति तै० ब्रा २. १. ८. १।

यश्चासु श्रुतिषूपात्त: श्रूयते पितृलोक:, स त्वन्तरिक्षलोकस्यो-पलक्षक:; अन्तरिक्षस्थ एव हि पितृलोक:; पितृलोकमात्र-श्चात्रास्मल्लक्ष्यस्थानं न सर्व मेवान्तरिक्ष मिति। तदप्यामनन्त्या-थर्वणिका: स्वसंहितायाम् ( १८. ४. ७३. )— "अभिप्रेहि मध्यतो माप हास्था: पितॄणां लोकं प्रथमो यो अत्र"–इति।

अपरञ्चान्यत्राम्नातम्— "अध इव हि पितृलोक:"–इति (श० ब्रा० १४. ६. १. १०)। द्युलोकस्याधस्तात् पितृलोक इत्येव तद्भाव:। पुण्यलोकशब्देनाप्यन्तरिक्षस्थस्य पितृलोकस्य ग्रहणं गम्यते। तद्यथा— "तस्मादाहु: पुण्यलोक इयान् इति"–इति श० ब्रा० ३. ६. २. १५। ताण्ड्यमहाब्राह्मणेऽपि (१२. ११. १२.) द्रष्टव्य मिदम्।

"कर्मणा पितृलोकः"–इति (श० ब्रा० १४. ४. ३. २४.) श्रुतेस्तत्रैव हि पुण्यात्मनां गमनं भवतीति पितृलोक एव स्यात् पुण्यलोकः। श्रूयते हि छान्दोग्यब्राह्मणे— "त्रयो धर्म्मस्कन्धाः,— यज्ञोऽध्ययनं दान मिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्य्याचार्य्यकुलवासः तृतीयः। ०—०। सर्व एते पुण्यलोका भवन्ति; ब्रह्मसंस्थो ऽमृतत्व मेति"–इति (४. २३. १.)। तदेतत्त्रिविधपुण्यानुष्ठातॄणां पुण्य-लोकापरपर्य्याये पितृलोके स्थानं भवति, ये तु ब्रह्मज्ञास्ते त्वमृतत्व-लाभाय पूर्वनिर्द्दिष्ट ममृतलोकं यान्तीति तदभिप्रायः।

सोऽन्तरिक्षस्थः पितृलोको नूनं सोमलोकः, स एव चन्द्र-लोकः। तथाहि— "स सोमलोकं, सोमलोके विभूति मनुभूय पुनरावर्त्तते"–इति प्र० उ० ५. ४। यः सोमः, स एव चन्द्रमाः। तथाहि अथ० सं० ११. ६. ७—

"सोमो मा देवो मुञ्चतु य माहुश्चन्द्रमा इति"–इति।

अपि शतपथे—"पितृलोकाज्जीवलोक मभ्यायन्ति; अथोऽग्निः पथोऽतिवोढा, स एताननतिवहति"–इति (१३. ८. ४. ६.)। तदेवं पितृलोकात्सोमलोकाच्चोभयतः पुनरावर्त्तनश्रुतिसाम्यात् उभयोरभिन्नत्वं सुव्यक्तम्। अथवा चन्द्रलोकात् किञ्चिदुच्चैः स्थितः पितृलोकः; तत एव "अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वा-च्योपासीदंस्तानब्रवीत्,— मासि मासि वोऽशनं स्वधा वो मनो-जवो नश्चन्द्रमा वो ज्योतिरिति"–इति (२. ४. २. २.) शत-पथश्रुतिः। अत एव चन्द्रमसः कृष्णशुक्लपक्षावेव पितॄणा महो-रात्राविति सिद्धान्तितम्। तथाह्याम्नातं शतपथे— "यदैवैषः (चन्द्रः) न पुरस्तान्न पश्चाद् ददृशेऽथैभ्यो (पितृभ्यः) ददाति; स वा अपराह्णे ददाति। पूर्वाह्णो वै देवानां मध्यन्दिनो मनु-

ष्याणा मपराह्णः पितॄणाम्, तस्मादपराह्णे ददाति”–इत्यादि (श० ब्रा० २. ४. २. ७.)। मनुसंहितायाञ्च (१. ६. ३.)—

“पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः।
कर्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी”–इति।
“मानेनानेन यो मासः पक्षद्वयसमन्वितः।
पितॄणां तदहोरात्र मिति कालविदो विदुः॥
कृष्णपक्षस्त्वहस्तेषां शुक्लपक्षस्तु शर्वरी।
कृष्णपक्षे त्वहःश्राद्धं पितॄणां वर्त्तते नृप!”–इति च ह० वं० ८।

ज्योतिःशास्त्रेऽप्युक्त मेव मेव। तथा च सि० शि०—

“विधूर्द्ध्वभागे पितरो वसन्तः स्वाधः सुधानिधि मामनन्ति।
पश्यन्ति तेऽर्कं निजमस्तकोर्द्ध्वे दर्शे यतोऽस्माद् द्युदलं तदैषाम्।
भार्द्धान्तरत्वान्न विधोरधःस्थं तस्मान्निशीथः खलु पौर्णमास्याम्।
कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्त मेत्यर्थत एव सिद्धम्”–इति॥

चन्द्रलोक एव पितृलोक इति पक्षे त्वत्र विधूर्द्ध्वभागे इति विधुपृष्ठे बोध्यम्; यथा वयं भूर्द्ध्वभागे = भूपृष्ठे वसामः, न तु खनिजहिरण्यादिवद् भूगर्भे इत्यभिप्रायः।

नन्वेव मनतिप्राचीनपुराणेतिहासज्योतिषादीन्यनार्षशास्त्राण्यपि किमप्रमाणानि? वेदाविरुद्धानि तान्यपि स्वतोषकराणि चेत् स्युः प्रमाणानीत्येवात्र ब्रूमः। अत एवोक्तं मनुना (२. १२.)— “स्वस्य च प्रिय मात्मनः”–इति, मीमांसाधिकरणमालायाञ्च “तेन द्वास्त्रिति तेषां प्रामाण्यं विप्रकृच्छ्रतः”–इत्येवोक्तम्। एव मपि यत् श्रूयते ऽन्यत्र “पितृलोकाच्चन्द्रम्”–इति (श० ब्रा० १४. ९. १. १०.), पितृलोकचन्द्रलोकयोरेकत्वपक्षे तदेतत् कथं सङ्गच्छते? इति, अत्र ब्रूमः— ‘पितृलोकात्’ पितृलोक मन्तरिक्षं चन्द्रमण्डलं वा

अभिगम्य 'चन्द्रम्' आप्नुवन्तीति तदर्थः; अन्यथा २१० पृ०-प्रदर्शिताथर्वणिकप्रश्नश्रुतिविरोधः स्यादनिवार्य एवेति। तस्मादेतस्माच्चोपपद्यतेऽस्य चन्द्रलोकोर्द्ध्वपृष्ठस्थपितृलोकस्यान्तरिक्षस्थत्वेनान्तरिक्षवाचितापीति।

अस्ति चास्यान्तरिक्षवाचित्वेऽपरमपि प्रमाणम्। तदेतत्— "पिता दुहितुर्गर्भ माधात् (ऋ० सं० १. १६४. ३३.)"—इति-मन्त्रांशव्याख्यानकाले यास्काचार्य आह— "पिता दुहितुर्गर्भं दधाति, पर्जन्यः पृथिव्याः"—इति (निरु० ४. ३. ५.)। पर्जन्यशब्दनिरुक्तिश्चैवं कृता— "पर्जन्यस्तृपेराद्यन्तविपरीतस्य, तर्पयिता जन्यः; परो जेता वा; जनयिता वा, प्रार्जयिता वा रसाना मिति" —इति (१०. १. १०), वृष्ट्या इति तच्छेषः। तद्रसार्जनन्तु भवति रश्मिभिः। तथाचाम्नातं वृष्टिविज्ञानसूक्ते ऋ० सं० १. १६४. ४७—

"कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिव मुत्पतन्ति।
त आ ववृत्रन्त्सदनादृतस्य आदिद् घृतेन पृथिवी व्युद्यते"—इति।

"कृष्णं" ('नियानं') निरयणं, रात्रिः। आदित्यस्य 'हरयः सुपर्णाः' आदित्यरश्मयः। 'ते' यदा ('आ ववृत्रन्') अमुतोऽर्वाञ्चः पर्यावर्त्तन्ते ('सदनात्') सहस्थानात् ('ऋतस्य') उदकस्य 'आदित्' अनन्तर मेव 'घृतेन' उदकेन 'पृथिवी व्युद्यते'। "घृत मित्युदकनाम; जिघर्त्तेः सिञ्चतिकर्मणः"—इति (७. ७. १.) चास्य यास्ककृतं व्याख्यानम्। ब्राह्मणेऽप्येव मेव। तद्यथा— "अग्निर्वा इतो वृष्टिं समीरयति धामच्छद् दिवि भूत्वा वर्षति, मरुतः सृष्टां वृष्टिं नयन्ति यदासावादित्योऽग्निं रश्मिभिः पर्यावर्त्ततेऽथ वर्षति"—इति (निरु० ७. ७. १.)। मन्त्रे 'दिवम्' द्युलोकं प्रति 'उत्पतन्ति' उड्डीना भवन्ति, तावद्दूरगमनात् पूर्व मेव

'ऋतस्य सदनात्' मेघनिर्म्माणायाहृतजलसञ्चयप्रदेशात् अन्तरिक्षात्, तं लोकं प्राप्यैवेति यावत्। ब्राह्मणे त्विह द्युशब्द उर्द्ध्वोपलक्षकः। तथाच 'दिवि भूत्वा वर्षति' उर्द्ध्व, आक्रष्टो भूत्वा वर्षतीति तदर्थः। अथवा इहापि पूर्ववद्व्याख्येयः 'दिवि भूत्वा' द्युलोकमत्याक्रष्टः सन्निति यावत्। तदेवं पितृवाचकपर्जन्यस्यान्तरिक्षस्थत्वात् सर्वस्यैवान्तरिक्षस्य पितृलोकत्वम्।

सोऽयमन्तरिक्षलोको द्युलोकादधस्थोऽप्येतस्मान्मनुष्यलोकादूर्द्ध्वस्थस्ततो मध्यलोक एव। एतच्चाम्नायते— "अन्तरिक्षलोक उ अस्माल्लोकादनन्तर्हितः"–इति ( श० ब्रा० ७. १. २. २३.)।

यस्मिंश्च लोके प्रतिष्ठितः पितृलोकः, सोऽन्तरिक्षलोक एवेन्द्रलोकः; तत्रैव मेघदारकवायोरिन्द्रस्य संस्थितिः। तच्छ्रुतम्—"इन्द्रलोको ह्येषः"–इति ( श० ब्रा० ८. ५. ३. ८. )।

वायुलोकोऽपि स एव; वायोरन्तरिक्षचारित्वं तु लोकेषु प्रसिद्धम्, "वायुरन्तरिक्षस्थः"–इत्यादिनैरुक्तादिभ्यश्चावगम्यते, श्रूयते चैवं साङ्ख्यायन ब्राह्मणेऽपि ( २०. १. )।

एतदेवान्तरिक्षं सन्ध्य मिति स्वप्नस्थान मिति च श्रुतम्— "तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानञ्च, सन्ध्यं तृतीयं स्वप्नस्थानम्, तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च"–इति श० ब्रा० १४. ७. १. ६। एवञ्च जीवलोकादस्मात् प्रेतानां परलोकजिगमिषूणा मिहान्तरिक्षलोके किञ्चित्कालं स्वप्नावस्थानं सूचितम्; यैस्तु पितृलोक आसन्नः, तेषा मिह स्वप्नावस्थानं न भवतीति च॥

अथास्य भूलोकस्य त्वित्व मप्यवगम्यते मन्त्रवर्णात्। तद्यथा ऋ० सं ७. १०४. ११—

"परः सो अस्तु तन्वा३तना च तिस्रः पृथिवीरधो अस्तु विश्वाः ।
प्रति शुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम्"
—इति । 'यः' 'नः' अस्मभ्यं 'दिवा' दिनं 'दिप्सति' करोति, 'यः' 'नक्तं च' दिप्सति ; 'सः' सूर्यो देवः, 'तन्वा' स्वशरीरेण, 'परः' द्युस्थः 'अस्तु' अस्ति, 'च' अपि 'तना' स्वप्रभाविस्तृत्या 'अधः' स्थिताः 'तिस्रः पृथिवीः', ता एव 'विश्वाः' सर्वा भूलोकाः आक्रम्य 'अस्तु' अस्ति । 'अस्य' देवस्य 'यशः' कीर्त्तिं 'देवाः' तद्रश्मय एव 'प्रति शुष्यतु' प्रतिक्षणं शोषयन्ति, तद्रश्मिभिरेवेदं सर्वं सम्पद्यत इति तद्यशस्तं एव हरन्तीति भावः ।

सूर्याधःस्थितास्ताश्चेमा पृथिव्यो नूनं क्रमादधोधःस्थिताः बुधशुक्रराहवः । तत्रेयं पृथिव्येव राहुरुच्यते । अत एतदाम्नात मृकसंहितायाम् ५. ४०. ९— यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः ।
अत्रयस्त मन्वविन्दन्न ह्य१न्ये अशक्नुवन्"—इति ।

तैत्तिरीया अपि समामनन्ति— "सुवर्भानुरासुरस्तमसाविध्यत्"—इति (२. १. २. ४.)। "सुवर्भानुरिति आसुरस्य कस्य चिन्नामधेयम् ( अग्राह्य मिदम् )। स्वर्गलोकगतां प्रभां नुदतीति सुवर्भानुः । स च पृथिव्या रूपं धृत्वा ( धृत्वेत्येवाज्ञानमूलजम् ) कृष्णवर्णः । पृथिव्याश्च कृष्णरूपत्वं लोके बहुलं दृश्यते ; छन्दोगाश्च "यत् कृष्णं तदन्नस्य"—इत्यन्नकारणभूतायाः पृथिव्याः कृष्णरूपत्व मामनन्ति (६. ४. २.)। अतस्तमःपुञ्जरूपः स आसुरः ( असुः प्राणः ; स विद्यतेऽस्येति असुरः प्राणी ; असुरस्यायमिति आसुरः, प्राण्याश्रयो भूलोकः ) स्वकीयेन तमसा (तमोरूपच्छायया) सूर्यं माच्छाद्य जगदान्ध्यं कृतवान्"—इति तत्र सायणीयं भाष्यम् । अत एवोक्तं सूर्यसिद्धान्ते(२अ० ६श्लो०)—

"दक्षिणोत्तरतो ऽप्येवं पातो राहुः स्वरंहसा ।
विक्षिपत्येष विक्षेपं चन्द्रादीना मपक्रमात्"–इति ।

"पातस्थानाधिष्ठात्री देवता राहुर्जीवविशेषः"–इत्यादि यद्व्याख्यात मिह रङ्गनाथेन, तत्तु नूनं वेदविदुषां हास्यकर मेव। दृश्यतेऽपि मनुष्यमुण्डसदृश्येव राहुप्रतिमा निर्म्मीयते पौराणिकैराधुनिकज्यौतिषिकैश्च ; इतोऽप्येतस्य मानुषनिलयत्वं सूच्यते। तदित्थं सूर्यस्याधस्थो बुध एव प्रथमो भूलोकः, तदधस्थः शुक्रः खलु द्वितीयो भूलोकः, तदधस्थिता इयं पृथिव्येव तृतीया भूस्वरूपा ; इमा एव तिस्रः पृथिव्य स्त्रयो भूलोकाः । त एव यूरोपीयज्यौतिषिकैरपीमे **Terrestrial planets** = पार्थिवग्रहा उच्यन्ते ।

एतेषां लोकानां येऽन्तरालप्रदेशास्तेषां समुदितानामेकरूपाणामेकं नामान्तरिक्ष मिति । तदस्यान्तरिक्षस्याप्यस्ति त्रित्वश्रवणम्, अस्ति द्युत एव दिवस्त्रित्वश्रुतिश्च। तद्यथा ह्येकस्मिन्नेव मन्त्रे लोकत्रयाणां प्रत्येकस्य त्रित्व माम्नायते ( ऋ० सं० ४. ५३. ५. )—

"त्रिरन्तरिक्षं सविता महित्वना ,
त्री रजांसि परिभूस्त्रीणि रोचना ।
तिस्रो दिवः पृथिवीस्तिस्र इन्वति,
त्रिभिर्व्रतैरभि नो रक्षति त्मना"–इति ।

तदत्र श्रुतं सर्वत्रित्वं पृथिवी त्रित्वनिबन्धन मेवेति प्रतीयते स्फुटम् । अर्थस्त्वस्य मन्त्रस्य निगदसिद्ध एवेति ॥

षट्त्व मपि श्रूयते पृथिव्याः । तद्यथा अ० सं० १०. ७. ३५—
"स्कम्भो दाधार द्यावापृथिवी उभे इमे स्कम्भो दाधारोर्वन्तरिक्षम् ।
स्कम्भो दाधार प्रदिशः षडुर्वीः
स्कम्भ इदं विश्वं भुवन माविवेश"–इति ।

आसु षट्सूर्वीषु सूर्यस्याधःस्थितास्तिस्रस्तिस्रस्तूपरिष्ठाः। अत एव पूर्वप्रदर्शितमन्त्रे श्रुतम् "तिस्रः पृथिवीरधो अस्तु विश्वाः"—इति।

श्रूयते च तत्रान्यत्र १०, १४, १६—

"त्रिकद्रुकेभिः पतति षडुर्वीरेक मिद्‌ बृहत्।

त्रिष्टुब् गायत्री छन्दांसि सर्वा ता यम आहिताः"—इति।

त्रिष्टुबिति गायत्रीति चेह लुप्तोपमानं पदद्वयम्। 'त्रिष्टुप्' यथा त्रिभिस्त्रिष्टुब्लक्षणैः पदैर्युक्तैकेति व्यपदिष्टापि वस्तुतस्तिस्रः, यथा च त्रिपदा 'गायत्री'; उभे चेते मिलितास्तत्वतः षट् 'छन्दांसि'; ता इव इमा अपि 'षट्' 'उर्व्यः' पृथिव्यः 'त्रिकद्रुकेभिः' त्रिश इति यावत् (सूर्यस्योपर्यधश्च) 'पतति' स्वस्वकक्षासु विभिन्ना भ्रमति। किम्भ्रमतीत्याह— 'बृहत्' महाकारम् 'इदं' षडुर्वीस्थैः समानं दृश्यमानम् 'एकम्' एव सूर्यम्। अत आह मन्त्रदृक्, 'सर्वाः ताः' षडुर्व्यः 'यमे' सर्वनियमनकर्त्तर्यतएव यमनामकेऽस्मिन् वायौ, तदुपलक्षितेऽन्तरिक्षे, सर्वनियन्तरि रश्मिभिराकृष्य धारके अमुष्मिन् सूर्ये वा 'आहिताः' स्थापिताः, सन्तीति शेषः। अतएवैव मिहैतरेये— "तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैरवस्तात् प्रत्युत्तम्भुवन्। ०—०। तस्य पराचोऽतिपातादबिभयुस्तं परमैः स्वर्गैर्लोकैः परस्ताद् प्रत्यस्तम्भुवन्। ०—०। तेषु वा एष एतदध्याहितस्तपति। स वा एष उत्तरोऽस्मात् सर्वस्मात् भूताद् भविष्यतः। सर्व मेवेद मतिरोचते यदिदं किञ्च"—इति (४. ३. ४.)। एवञ्च यथा सूर्यस्याधोऽधः क्रमात् बुधशुक्रराहुकक्षाणां स्थितिः प्रतिपादिता, तथैव तस्योपर्युपरि च क्रमादस्ति मङ्गल-बृहस्पति-शनैश्चरकक्षाणां संस्थितिः। षड् एवैते भूलोकाः, ततोऽत्र षट्स्वेव

प्राणिन: सन्तीति च गम्यते। एभ्य: षड्भ्य एव भूलोकेभ्य: ऊर्द्ध मादित्यस्तपति। एकस्यास्यैव सूर्यस्य रश्मिभि: षडेवेमे आबद्धा:, भ्रमणशीला:, प्रकाशमाना:, सृष्टिस्थितिप्रलयहेतुवायुविद्युद्वृष्ट्यादिवन्तश्चेत्यपि। चन्द्र: पृथिव्या उपग्रह इति पृथिवीग्रहणेनैव तद्ग्रहणं सिध्यति; स्वस्वोपग्रहसहिताना मेव शनैश्चरादिराह्वन्तानां ग्रहाणा मिह पृथिवीत्वेन परिगणन मिष्ट मित्येवास्या: पृथिव्या उपग्रहस्यैतस्य चन्द्रमसो न कृतं पृथग् ग्रहण मिति सुप्रत्येतव्य मेव।

एषां नु सर्वेषां शनिगुरुकुजसूर्यबुधशुक्रराहूणां सप्तानां स्वर्गत्वेन स्तुतिरपि श्रूयते ब्राह्मणेषु। तद्यथा— "रोहति सप्त स्वर्गांल्लोकान् य एवं वेद"–इति (ऐ० ब्रा० ५. २. ५.), "सप्त वै देवलोका:"–इति च (ऐ० ब्रा० ४. २. ३.)। सर्व मेतदेषूपपद्यते 'देवानां' रश्मिनां सर्वत्रैव विद्यमानत्वादिति।

यद्यप्येषु सप्तसु सूर्यस्त्वेक: स्थिर इति श्रुतित एव प्रतिपादितं पुरस्तात् (१०८पृ०), तथाप्यस्य सर्वग्रहोपग्रहसमन्वितस्य सौरजगन्मण्डलाधिपस्यापि ध्रुवाद्याकर्षणबलेन भ्रमणं सम्भाव्यते; सामवेदे "द्यौर्नौस्तस्या मसावादित्य ईयते"–इत्यादिश्रवणात् (आर० गा० ६. २. २१.)। मदीयत्रयीटीकायां तद्व्याख्यानञ्च द्रष्टव्यम्। वस्तुत: सौरजगन्मण्डलस्थिताना मस्मदादीनां दृष्ट्या सूर्यस्य गतिराहित्येऽपि सौरजगन्मण्डलस्य न तथात्व मिति सर्वसिद्धान्त:। अत: सर्वतोऽधिकविस्तृता भवत्यस्य कक्षा (भ्रमणमार्ग:), ततो न्यूना शनैश्चरस्य, ततो न्यूना जीवस्य, ततो न्यूना मङ्गलस्य, ततो न्यूना राहो: (पृथिव्या:), ततो न्यूना शुक्रस्य, बुधस्य तु ततोऽपि न्यूनेति। अत इदं श्रूयते— "परो वरीयांसो वा इमे लोका अर्वाग्गहीयांस:"–इति (ऐ० ब्रा० १. ४. ८.)॥

चन्द्रकक्षा तु न सूर्यप्रक्रमणपरा, अपि त्वेतत्पृथिवीप्रक्रमणपरेति नात्र तस्याः ग्रहण मिष्टम्। किन्तु चन्द्रपृष्ठस्य पितृलोकत्वेन स्वीकारात्, पितृणाञ्च स्वभोगाय तत्र गमनश्रवणाच्च तस्यापि स्वर्गत्वं मन्यते ब्राह्मणकारैः। तथाहि— "तद् ये ह वै तदिष्टापूर्त्ते कृत मित्युपासते। ते चान्द्रमस मेव लोक मभि जयन्ते"—इति प्र० उ० १. ९। शतपथे ऽप्येवम् ( १४. ९. १. १९. ), छान्दोग्यब्राह्मणेऽप्येव मेव ( ५. १०. )। वेदान्तसूत्रेष्वपीदं बहु विचारितम् ( ३. १. २२—२७. )। तदीयन्यायमालाया मपीह कतिचिदधिकरणान्यारचितानि। तत्रैक मिदम् ३. १. ३—

"चन्द्रं याति न वा पापी ? 'ते सर्वे—इतिवाक्यतः।
पञ्चमाहुतिलाभार्थं भोगाभावेऽपि यात्यसौ॥
भोगार्थ मेव गमन माहुतिर्व्यभिचारिणी।
सर्वश्रुतिः सुकृतिनां ; याम्ये पापिगतिः श्रुता"—इति।

अपि सुकृतिनां सूक्ष्मभोगपरितृप्तिलाभयोग्यचित्तत्वाच्चन्द्रलोके विद्युद्वृष्टिजलान्नौषधितरुलतागुल्मादीनां नास्त्येव प्रयोजन मिति तेषा मभाव एव। तस्मात् श्रूयत एतत् (ऋ० सं० १.१६४.४१.)—

"भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः"—इति।

तथाच यथास्मच्छरीररक्षणाय अन्नपानीयाद्युत्पत्त्यर्थं वृष्ट्यादीनां प्रयोजन मस्ति, न तथा तत्रत्यानाम् ; किञ्च तत्राप्यस्ति रश्मिरूपाग्नीनां प्रयोजन मिति, तेषां प्रभावो विद्यत एव। "अत्राह गोरमन्वत"—इति (१११पृ०—निरु०२. २. २ ; ४. ४. ६.) श्रुतौ तत् स्पष्टम्।

ननु तत्र 'दिवं जिन्वन्त्यग्नयः'— इत्युक्तम्, न हि चन्द्रमा द्यौर्द्युस्थो वेति तत् कथ मिह सा श्रुतिरुपपद्येत नामेति। अत्र

ब्रूमः— एतादृशश्रुतिषु श्रुतो द्युशब्दो नून मन्तरिक्षलोकस्योपलक्षकः। एतावतैवान्तरिक्षस्थस्य पर्जन्यहेतोरग्निधूमस्यापि द्युलोकाश्रयणं नानुपपन्नम्— "घृतेन त्वावर्द्धयन्नग्न आहुत धूमस्ते केतुरभवत् दिवि श्रितः"—इति (ऋ० सं० ५. ११. ३.)। "दिवि सोमो अधिश्रितः"—इत्यत्राप्येव मेवावगन्तव्य मस्ति ( ऋ० सं० १०.८५. १. )। तत्रतस्तु "चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि"—इति (वा० सं० ३३. ९०.) इत्येवमादिश्रुतिभ्यः 'सुपर्णस्य' सूर्यस्य द्युस्थलम्, तदधः 'अप्सु' अन्तरिक्षे चन्द्रमसः स्थान मित्येव ध्रुवम्।

अथाप्यस्य चन्द्रमसोऽप्यवमस्वर्गत्व मुररीकार्यम्। अत एव "सहस्राश्वीने वा इतः स्वर्गो लोकः"—इति (२. २. ७.) ऐतरेयश्रुतं सङ्गच्छते। आश्वीनं नामेह मार्गस्य परिमाणम्; एकस्मिन्नहनि यावन्त मध्वान मतिक्रामत्यश्वः; तावानेवाध्वा आश्वीन इत्युच्यते। तथा च सूत्रयदाचार्यः पाणिनिः— "अश्वस्यैकाहगमः"—इति (५. १. १९.)। यथा ह्याह्निकं सार्द्धद्वियोजनगमनं सुकरं मनुष्याणाम्, तथैव षड्योजनगमन मश्वाना मिति लोकप्रसिद्धम्; एवञ्चेतो भूलोकात् षट्सहस्रयोजनान्तरे स्वर्गस्थितिरित्यभिप्रेत मेवास्य श्रुतिकृत इति स्फुटम्; स्वीकुर्वन्ति चास्मज्ज्यौतिषिका अप्येव मितो दूरत्वं चन्द्रमःकक्षाया इति चन्द्रमण्डल मेवात्र स्वर्गत्वेनाभिप्रेत मिति च नास्फुटम्॥

अथेहैव यत् श्रुतम्— "नव स्वर्गा लोकाः"—इति (४. ३. २.), तदेतत् शारीरनवप्राणाभिप्रायेणैव। एवं यदपि श्रुतम् "त्रय इम ऊर्द्धा एकविंशा लोकाः, एकविंशत्यैवेमांल्लोकान् रोहति, स्वर्ग एव लोके चतुष्षष्ठितमेन प्रतितिष्ठति"— इति ( ऐ० ब्रा० १. १. ५. ), तदेतच्च स्यात् विभिन्नाभिप्रायमूलकम्। एवमादिश्रुति-

वचनानां तात्पर्यादिकं वेदार्थचिन्तनपरैर्विद्वद्भिः स्वस्वविज्ञानसाहाय्यादिभिः स्वय मेवोहनीयम्। "बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति"—इति (७. ७. २.) नैरुक्तं वा स्यात् तेषां शरणम्॥

वस्तुतः सूर्यलोक एवैको मुख्यः स्वर्गो लोकः सर्व-मन्त्रसंहितासम्मतः। तस्मादाम्नात एष मन्त्रः सर्ववेदेषु—

"उद् वयं तमसस्परि ज्योतिः पश्यन्त उत्तरम्।
देवं देवत्रा सूर्य मगन्म ज्योतिरुत्तमम्"—इति ऋ० सं० १.५०.१०।

"उद् वयं तमसस्परि स्वः पश्यन्त उत्तरम्।
देवं देवत्रा सूर्य मगन्म ज्योतिरुत्तमम्"—इति वा० सं० २०. २१।

उद् वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम्।
देवं देवत्रा सूर्य मगन्म ज्योतिरुत्तमम्"-इति तै० सं० ५. १. ७. १०।

उद्वयाम्। तमसस्पारी२। ज्योतिः पश्यन्त उत्तरा२म्।
स्वः पश्यन्तउत्तरा२म्। देवन्देवत्रा२सू२३४रीम्।
अगन्म ज्योतिरुत्तमा२म्"—इति सा० सं० भारुण्डसाम।

"उद् वयं तमसस्परि रोहन्तो नाक मुत्तरम्।
देवं देवत्रा सूर्य मगन्म ज्योतिरुत्तमम्"—इति अथ० सं० ७. ५३. ७।

शाखाभेदहेतुषु योऽन्यतमो वर्णितः पाठभेदो नाम, तन्निदर्शनभूतञ्चेदं सम्पन्नं चतुर्वेदीयपञ्चशाखावचन मिति चेह संलक्ष्यम्।

अथैवमादिश्रुतिषु उत्तरशब्दस्य स्वर्गवाचकस्वरादिशब्दविशेषणत्वेन श्रुतत्वात् अस्याः पृथिव्या अप्युत्तरो भागः स्वर्ग इति व्यपदिष्टः। तच्च श्रूयते "उत्तरो वा असावस्यै"—इति श० ब्रा० ८. ६. ३. १४। 'असौ' स्वर्गः, 'अस्यै' अस्याः पृथिव्याः 'उत्तरो वै' इति तदर्थः। अस्या इति षष्ठ्यर्थे चतुर्थी (पा० २. ३. ६२ सू० १ वा०)। आह च "स उत्तरस्मादधरं समुद्रम् (ऋ० सं० १०. ९८. ५.)"

–इति-मन्त्रभागस्य व्याख्यायां यास्कः— "उत्तरः = उद्गततरो भवति, अधरः = अधो रः, अधः = न धावतीति, ऊर्ध्वगति-प्रतिषिद्धा"–इति ( २. ३. १. )। तस्मात् पृथिव्याश्च ऊर्ध्वो भागः स्वर्गः, तद्विपरीतोऽधःप्रदेशो नरक इति चाभवत् सिद्धान्तः। पृथिव्याः सर्वोर्ध्वप्रदेशः सुमेरुः, सर्वाधःप्रदेशः कुमेरु रिति च सर्व-ज्योतिषशास्त्रप्रसिद्धः। तत एव सुमेरोः पुण्यात्मनिलयत्वम्, तथा कुमेरोः पापात्मालयत्वं च वर्णित मनेकत्र।

उत्तरदिङ्नामबीज मपीद मेव। पृथिव्येषा सदैव सूर्याभिमुखी-त्यस्याः पुरतः सूर्यः सदैव राजते, तत इवैषा दिक् पुर इत्युच्यते, प्राचीति च। सूर्याभिमुखं बम्भ्रमन्त्या अस्याः पृथिव्याः पश्चाद्भाग एव पश्चिमा, प्रतीचीति च। अस्याः खलु यस्यां दिशि शिरोव्यपदेश-भाक् सुमेरुप्रदेशो विद्यते, सा ऊर्ध्वतमेति उत्तरा, उदीचीति च। यस्यान्तु पादतलभूत इति पातालव्यपदेशभाक् कुमेरुप्रदेशः, सैवाधोऽधरा, अवाची, दक्षिणेति च। तत्राधोभुवनरूपे कुमेरु-प्रदेशे समुद्रोदकप्राचुर्यादीश्वराधीनप्रकृतिनियमाद् बहुत्रैव बाडवा-नलाः प्रज्वलन्तीति तदवान्तरा दिक् आग्नेयीत्युच्यते। त एव बाड-वाग्नयः पापिनां दमनाय दहनकुण्डान्याख्यायन्ते; अतः स एवात्यः पापलोकः। तत्र चाग्नेः प्राधान्य मिति स एव प्रदेशो यमलोकः॥

सोऽधो लोक एव प्रथमो यमलोकः, एष पृथिवी-देवो ऽग्नि-रेवात्र यमो नाम। तदिदं श्रूयते— "अग्निर्वाव यमः, इयं यमी"–इति तै० सं० ३. ३. ८. ३; श० ब्रा० ६. २. १. १०। 'इयं'–शब्देनात्र पृथिवी गम्यते।

एतावेव यमीयमाववलम्ब्य यमयमीसंवादरूपं यत् सूक्त माम्नात मार्क्ष्याम्नाये ( १०. १०. ), तस्य सप्तम्येषा—

"यमस्य मा यम्यं १ काम आग-
न्त्समाने योनौ सह शेय्याय।
जायेव पत्ये तन्वं रिरिच्यां
वि चिद् वृहेव रथ्येव चक्रा"–इति।

अन्तरिक्षलोकस्तु द्वितीयो यमलोकः, अन्तरिक्षदेवो वायुरेवात्र यमो नाम। तथा ह्येष यमशब्द आम्नातो निघण्टौ मध्यस्थानदेवतासु (५. ४. १२.)। व्याख्यातञ्चैतद् यमपदम् "यमो यच्छतीति सतः"–इति यास्केन (१०. २. ७.)। उदीरता मिति पितृसूक्तगतमन्त्रस्य व्याख्यानकाले व्यक्त मुक्तञ्चैतत्तेन— "माध्यमिको यम इत्याहुः"–इति (११. २. ६.)। स एष यमो जनानां सङ्गमनो वायुरेव। तथाहि ऋ० सं० १०. १४. १—

"परेयिवांसं प्रवतो महीरनु
बहुभ्यः पन्था मनुपस्पशानम्।
वैवस्वतं सङ्गमनं जनानां
यमं राजानं हविषा दुवस्य"–इति।
"यो ममार प्रथमो मर्त्यानां
यः प्रेयाय प्रथमो लोक मेतम्।
वैवस्वतं सङ्गमनं जनानां
यमं राजानं हविषा सपर्यत"
–इति च अथ० सं० १८. ३. १३।

विवस्वान् सविता आदित्यः; तत्प्रसूत एव वायुर्वातीति वायोर्वैवस्वतत्वम्। तच्चाहैहैव— "सवितृप्रसूतो ह्येष एतत् पवते"–इति (१. २. १.)। यथेहत्याना मस्माकं राजा अग्निर्नाम यमः, तथैवान्तरिक्ष्याणां वायुर्नामेति ; स एव यमो पितृराडित्युच्यते।

अथैतत्सूक्तादनन्तरं पितृसूक्त माम्नातम् , तस्यैवादिमैषा—

"उदीरता मवर उत्परास:
उन्मध्यमा: पितर: सोम्यास:।
असुं य ईयुरवृका ऋतज्ञा-
स्ते नोऽवन्तु पितरो हवेषु"—इति।

सूर्योऽपि यम उच्यते। अत एव द्युस्थानदेवतास्वपि पठितं यम इति पदम् ( ५. ६. १७. )। सूर्यपरो निगमश्च यमशब्दस्य प्रदर्शितोऽयं यास्केन ( ऋ० सं० १०. १३५. १. )—

"यस्मिन् वृक्षे सुपलाशे देवै: सम्पिबते यम:।
अत्रा नो विश्पति: पिता पुराणाँ अनु वेनति"—इति।

"सङ्गच्छते यमो रश्मिभिरादित्य:"—इति च निरु० १२. ३. १०। अत एवाथर्वसंहितायां वशादायिनां यमराज्ये यत् सर्वकामावाप्ति-फल माम्नातम् , न तत् सूर्यलोकरूपप्रधानस्वर्गाद्दतेऽन्यतमे स्वर्गे सम्भाव्यते। तथा ह्यर्द्धर्च: ११. ४. ३५—

"सर्वान् कामान् यमराज्ये वशा प्रददुषे दुहे"—इति॥

अथ तदपरार्द्धर्चे वशाप्रार्थनारोधकारिणां नरकगमनञ्चाम्नातम्—

"अथाहुर्नारकं लोकं निरुन्धानस्य याचिताम्"—इति।

यमलोकात् पापलोकेषु पतनञ्च श्रुतम् अथ० सं० १२. ५. ६४—

"यथायाद् यमसादनात् पापलोकान् परावत:"—इति।

शुनःशाखीयमन्त्रश्चैक: प्रदर्शितोऽत्र यास्केन ( १. ३. ६. )—

"हविर्भिरेके स्वरित: सचन्ते
सुन्वन्त एके सवनेषु सोमान्।
शचीर्मदन्त उत दक्षिणाभि-
र्नेज्जिह्मायन्त्यो नरकं पताम"—इति।

'एके' ज्ञानिनः 'हविर्भिः' अग्नौ हविःप्रक्षेपादिभिर्नित्य-कर्मानुष्ठानमात्रैः 'इतः' अस्माल्लोकात् 'स्वः' स्वर्गं सूर्यलोकं (ब्रह्मलोकं) 'सचन्ते' गच्छन्ति; 'एके' यज्वानः ज्योतिष्टोमादौ 'सवनेषु' प्रातर्माध्यन्दिनतृतीयनामकेषु 'सोमान् सुन्वन्तः', 'इतः स्वः (चन्द्रलोकं) सचन्ते'-इत्येव; 'उत' अपि 'दक्षिणाभिः' दाक्षिण्यैः 'शचीः' कर्माणि 'मदन्तः' कुर्वन्तः, 'इतः' गत्वा, पुनरिममेव 'स्वः' भूस्वर्गं 'सचन्ते' आवर्त्तन्ते। 'नेत्' नैवं चेत्, 'जिह्मायन्त्यः' जिह्मायन्तः, पापानुष्ठानं कुर्वन्तो 'नरकम् पताम' इति जानीयुरिति। तदेव मत्र चतुर्षु मन्त्रपादेषु चतुर्विधाना मस्माकं चतुर्धा गतिर्निरूपितेति सुव्यक्तम्।

"नरकं न्यरकं नीचैर्गमनम्, नास्मिन् रमणं स्थान मल्प मप्यस्तीति वा"-इति, "पापः पाता पेयानाम्, पापत्यमानो वा, अवाङेव पततीति वा पापत्यतेर्वा स्यात्"-इति च नि० १. ३. ६५. १. २.। "नाक आदित्यो भवति; नेता भासां ज्योतिषां प्रणयः ०—० क मिति सुखनाम, तत्प्रतिषिद्धम्, प्रतिषिद्धं प्रतिषिध्येत। "न वा अमुं जग्मुषे किञ्च नाकम् (ता० ब्रा० १०. १. १८.) न वा अमुं गतवते ('किञ्चन अकम्') किञ्चनासुखम्; पुण्यकृतो ह्येव तत्र गच्छन्ति"-इति (२. ४. २.)। "न हि तत्र गताय कस्मैचनाकं भवति"-इति च शत० ब्रा० ८. ७. १. २४। तदेवं यथा सुकृतिनां पुण्यफलपुरस्कारभोगाय भवति स्वर्गमनम्, तथैव पापिनां पापफलोपभोगाय भवत्येव नरकगमनमिति सुवचम्॥

अथ यथा सुमेरोः स्वर्गत्वं वर्णितम्, कुमेरोर्निरयत्वञ्च (२२०, २२१ पृ०), तथैवाद्यतनार्यावर्त्तस्यास्य पश्चिमोत्तर-भूभागस्य काश्मीरादेः रमणत्वं, ततोऽप्युत्तरस्य हिमवत्पृष्ठस्य-

मानससरोवरप्रदेशादेः, ततोऽप्युत्तरस्योत्तरकुरुप्रदेशस्य च, स्वर्गत्वञ्चाहुः पौराणिकाः; अप्यार्यावर्त्तपादतलरूपस्य आग्नेय्यां दिशि स्थितस्य, अत एव पातालस्य प्राग्ज्योतिषाधःप्रदेशस्य नरकत्वम्, तत्प्रदेशाधिपतेर्नरकराजत्वञ्चेति। तदत्र रमणनामत एव तत्प्रदेशस्य रमणीयत्वेन स्वर्गतुल्यत्वं ज्ञापितम् (महा० भी० प० १०८. ६६.), मानससरोवरादिप्रशंसाकथा त्विह पूर्व मेव वर्णिता (४१, ६७, ६८पृ०), तथा "मुरुञ्च नरकञ्चैव शास्ति यो यवनाधिपः भगदत्तो नरकराट्"–इत्यादिवचनात् (महा० स० प० १४. १५.) प्राग्ज्योतिषप्रदेशस्य नरकत्वञ्च सुव्यक्तम्।

अपि चात्रार्यावर्त्ते गङ्गादिनिम्नगाप्रवाहदर्शनाच्चावगम्यते गङ्गाप्रभवादिदेशाना मुच्चैष्टम्, ब्रह्मपुत्रसङ्गमादिस्थानाना मतिनीचैष्टञ्च; आयुराकृतिप्रकृतिबलव्यवहारादिदर्शनतोऽपि प्रतीयते कुरुपाञ्चालादीनां देवत्वं वाङ्गोत्तरवाङ्गादीना मतथात्व मिति।

तत्वतस्तु यथास्यां पृथिव्या मप्यन्तरिक्षद्युलोकयोः स्थितिरुपलभ्यते, यथा चास्मच्छरीरेष्वपि त्रिलोकाधिप-त्रिदेवाना मग्निवाय्वादित्याना मस्ति विद्यमानतेति त्रिलोकीत्व मप्येषां वक्तु युज्यते, एवं भूर्भुवःस्वरिति त्रयाणा मेव लोकानां प्रीतिहेतुत्वात् त्रयाणा मेवास्ति स्वर्गत्व मपि; परं तत्राप्यधममध्यमोत्तमभेदो नूनं मन्तव्यः; तथा च सूर्यमण्डलान्तर्ब्रह्मलोक एवोत्तमः स्वर्गः! एतदप्याम्नातम्—

"अष्टचक्रा नवद्वारा देवानां पूरयोध्या।
तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषावृतः॥
तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते।
तस्मिन् यद् यक्ष मात्मन्वत् तद् वै ब्रह्मविदो विदुः"
–इति अथ० सं० १०. २. ३१, ३२॥

स एषः स्वर्गो दुरारोहः। तच्चाम्नात मिहापि—"स्वर्गो वै लोको दूरोणम्"—इति ( ४. ३. ६. )। यागादिसाधन मन्तरा न कोऽपि तत्र गन्तुं शक्नोतीति यत इति भावः। आम्नायते चैतत्— "स्वर्ग एव तल्लोकं यजमानं गमयति"—इति ( ४. १. ४. )। एवञ्च स्वर्जिगमिषूणां सौरलोकाद्यन्यतमे स्वर्गे प्रवेशसामर्थ्योपपादन मेवाग्निष्टोमादिफलम्, तदुपदेश एवैतस्य प्रयोजनं सिद्ध मिति शम् ॥

---

अथैतदैतरेयालोचन मुपसंहरन्तोऽपि किञ्चिद्वदामः॥—

ऐतरेय मालोचयितुं प्रवृत्तैरस्माभिः प्रसङ्गतोऽपरेऽपि बहवो वैदिकविषयाः समालोचिताः, किञ्च "तेन ह्यन्तरिते तेषां प्रामाण्यं विप्रकृष्यते"—इति मीमांसान्यायवचनतो वेदार्थाविरुद्धानां कृच्छ्रप्रमाणानां पुराणादिवचनाना मपीह बहुत्र स्वमतपोषणाद्यायोल्लेखः कृतः, सत्यानुरोधतोऽद्यतनसमाजविरुद्धा अप्यत्र लिखिताः स्युः केचन, मानुषप्रकृतिभ्रमविजृम्भिता अवश्यम्भाविनोऽपि भावाः सम्भवाः स्युस्तत्र केचन। तदेवमादिषु किं करणीय मासीदस्मादृशाना मत्यल्पमतीना मप्यनल्पचिन्तालोडितशिर्षेखाना मिति 'विद्वांसो वै देवाः'—'सत्यसंहिता वै देवाः'—इत्यादिश्रुत्यर्थानुगता देवा एव विचारयन्तु, यतस्त एवात्र नः शरण मिति।

अथेहालोचितेभ्योऽन्येऽपि सन्ति बहवः सत्यसिद्धान्ताः, तेष्वेते त्रयो नून मधिगन्तव्या वेदसत्यार्थजिज्ञासुभिस्तत्रैष प्रथमः—

वेदे यथा लेट्लकारस्य प्रयोगो न तु व्यत्ययविशेषः, तथैव अतीतानागतवर्त्तमानकालबोधका लङ्लुङ्लिटः प्रत्ययाः भवन्ति छान्दसाः; न च ते व्यत्ययत्वेन स्वीकार्य्याः। तथा च यत्र यत्र लङ्-लुङ्-लिटा मन्यतमस्य प्रयोगः श्रुतः, तत्र सर्वत्रैव

प्रायः सार्वकालिकोऽर्थ एव बोध्यः। अत एव "व्यत्ययो बहुलम्" –इत्यादि (३. १. ८५.) सूत्रजातं विदधतापि भगवता पाणिनिना सूत्रितम्— "छन्दसि लङ्लुङ्लिटः"–इति (३. ४. ६.)। एवञ्च "यथापूर्व मकल्पयत् ( १०. १९०. १—३. )"–इत्येवमादौ 'यथापूर्वम्' पूर्ववदेव 'अकल्पयत्' सदैव कल्पयतीत्याद्यर्थो मन्तव्यः। एवं हि यथा ह्यः सूर्य उदैत्, यथा चाद्य उदेति, तथैव श्वश्च उदेष्यतीतिवत् सदैवैकरूपया सृष्टिक्रियया भवितव्य मिति तन्मन्त्राशयः। एवमेवैवमादिषु सर्वत्रैव लङ्लुङ्लिटां सार्वकालिकोऽर्थो वेदितव्य इति।

अथ द्वितीयः।—अध्यात्माधिदैवतार्थाना मेव वैदिकमन्त्राणां प्राधान्यम्, अधियज्ञानान्तु न तथात्वम्; यज्ञयज्ञाङ्गकर्मादिविधायकब्राह्मणादिवचनाना मादिवेदभाष्यत्वेन बहुपरतन्त्रत्वसिद्धान्तात्। एवञ्चासीत् कृतयुगेऽध्यात्ममन्त्रार्थप्रियता, त्रेतायां तथाधिदैवतार्थपरता च, द्वापरे एवाभवन्मन्त्राणा मधियज्ञार्थप्रवणता चेति हि केषाञ्चित् वेदतत्त्वार्थचिन्तापरायणानाम्।

अतएवोक्तं मनुसंहितायाम् ( १. ८६. )—

"तपः परं कृतयुगे त्रेतायां ज्ञान मुच्यते।
द्वापरे यज्ञ मेवाहुर्दान मेकं कलौ युगे"–इति।

अन्तिमस्त्वेषः।—यावत्यः सृष्टिकथा ब्राह्मणग्रन्थेष्वेव संश्रुताः, सर्वा एव ताः कल्पनामूलिकाः, किञ्चिद्विज्ञानज्ञापिकाः, तत्तत्प्रकरणगतोपदेशसाधिकाश्च; यथा पातञ्जले महाभाष्ये सन्ति बह्व्य एव एकदेश्युक्तयस्तथेति। अत एवोक्तं निरुक्तकारैः "बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति"–इति (७. ७. २.)। तच्चेद मार्चाभ्याम्नाये विस्पष्ट माम्नातम् ( १, १६४, ४, )—

“को ददर्श प्रथमं जायमान मस्थन्वन्तं यदनस्था बिभर्त्ति।
भूम्या असुरसृगात्मा क्वस्वित् को विद्वांस मुपगात् प्रष्टु मेतत्”—इति।

अन्यच्चैतत् ( ऋ० सं० १. १८५. १. )—

“कतरा पूर्वा कतरापरायोः,
कथा जाते कवयः को विवेद ?
विश्वं त्मना बिभृतो यद्ध नाम,
विवर्त्तेते अहनी चक्रियेव” ॥

—इत्येव सत्य मिति सत्यः ॥



आलोचन मिदं स्वल्प मैतरेयस्य नामतः।
सम्पन्नं सर्ववेदाना मनल्पं सूत्ररूपतः॥
वसुकेभेनमे शाके सत्यव्रतहृदुत्थितम्।
भाष्यन्त्वस्य प्रवक्तव्यं वेदविज्ञानवेत्तृभिः॥
नामग्राहं विनिर्मातुर्ग्राह्यां गृह्णन्तु गा मितः।
नो चेत् स्यान्नीतिदलनं ब्रह्मगोहरणञ्च ‘वम्’॥

